## ५२२० श्री. शां. ज्ञा. भं. खंभात.

श्रीउत्तराध्ययनबृहद्वृत्तिः ता. प्र. २

श्रीश्रीमालपुरीयवंशेऽमहावंशा सुपर्वाचला, सच्छाय सगल सुमूलसहित ख्यातोऽस्तिभूमडल ॥
यशाल्पोऽथ बभूव तत्र गुणभृ मा य क्षितीशैरपि। च्यायो बृद्धविभूषितोऽमलतनुर्मुक्ताफलभोग वल ॥१॥
विहितविशदचित पात्रवि यस्तवित । प्रतिदिनशुभचर्ये सुवत शिष्टधुर्ये ॥
निरपमशमभूमि सवरा श्री निधान । नयविनयवरिष्ट श्रावक स प्रतिष्ट ॥ २ ॥
प्रीत्या जिनत्रिभुवनप्रभुरेकएव चित्ते निवृत्तमवसगतिहेतुदोष ॥
तच्छासनोदितनयानुगता च वृत्तिर्वाकाययोरुचितमापणकृत्यपूना ॥ ३ ॥
उदारता दक्षिणता कृतज्ञता विवेकिता स त्तनसङ्गचित्तता ।
इत्यादयो यत्र गुणातिराग ॥ ४ ॥
पत्नीबभूव सा तस्य यशोदेवी विनीता । दूषणैर्गुणर नौपल्लानिभिर्भूतकुप्रहा • ॥ ५ ॥
अथाभूवन् सुतास्तस्या श्ववारोऽपि विचक्षणा । देवचद्र इति येत्र मधुम्नाम्यस्तथापर ॥ ६ ॥
शाते गेंहे मच्छ शान्तियशोभूभिस्तथा जस । प्रधान लोक पान ॥ ७ ॥
शीला विशिष्ट लोकैरभिनदनीया । नराधे यत् ख्यातिरवा पृथिव्या ॥ ८ ॥
अथासौ सा यशादेवी, सवेगासिद्ध मानसा । एकदा चिन्तयामास, संसार सौख्य दुस्तर ॥ ९ ॥
आयु(वायु)र्विनूतचूतल्लविकालाल बयो विस्फुरद्विद्युदीभिचल स्मरार्त तरु दिव भगुरा श्रीवं (?)
य सौख्यमोक्षद्वदहो धर्म पर सेव्यते ॥ १० ॥
प्रभवति स च ज्ञानात् तच्चार्हदागमत सैव प्रतिकल (मनु) गल्पप्रज्ञैर्ज्ञेयो विना नहि पुस्तक ।
इति सदमलचक्षुः पुसा कुवोधविपोषध । शिवसुलकर स्य लोकद्वयीहितकल्पर ॥ ११ ॥
किंच—
कामोग्रमदवैकयो(यो)भमवराकीर्णे ता । मूढाना दृढमतिना विषयतृद्खेदच्छिदे तप्यते ॥
धन्यैर्दन मत विलेख्य विधिना ज्ञानामृतीम प्रपा ॥ १२ ॥
उक्त च ज्ञानदान तदिह जिनपति कैवलालोकमाप्य,
त्रैलोक्य बोधयिष्यन् समवसृति (गत) पूर्वमेवाप्यदेव ।
भो भव्या ! मोक्षसौख्य ताया सुकृतइति सदा वर्तितव्यं क्रियाया ॥ १३ ॥
यत:—
अज्ञानत कृत्यविधौ प्रवृत्तो, न प्राप्नुर्यादैहिकमभ्युदय ।
सर्वा (स्वर्गा) पवर्गोद्भवसौख्य रूप, पारत्रिक किं पुनराहताऽपि ? ॥ १४ ॥
ज्ञात्वा चित्रितमेतदत्रविविधव्यापक(द)वृत्त भक्त्या सकादु करकटको करमिपप्रोद्भूतपुण्याकुर ।
अर्हत्ताकरसर्वसार्वबचनव्याप्यनाम्नुवत । शांति पुस्तकमतदर्थमनघ व्यालेखयामास स ॥ १५ ॥
॥ मगळ ॥

## ७००८ श्री जैनानंद पुस्तकालय. सुरत.

श्रीकालिकाचार्यकथा. ता. प्र. ३

इतिश्री कालिकाचार्य कथानकं समाप्तं ॥ शुभं भवतु श्री श्रमणसंघस्य ॥ श्री पूर्णिमापक्षीय-भट्टारकश्रीपुण्यतिलकसूरिचरणकमलध्यानैकमनसां श्रीयतिशेखरसूरीणां ॥ श्रीः ॥

## ४६८७ श्री उजम फोइ जैन धर्मशाळा. अमदावाद.

श्रीशतकटिप्पनकं. ता. प्र. ४

इति शिताम्बरश्रीमुनिचंद्रसूरिविरचितं शतकटिप्पकनं समाप्तं ॥ प्रत्यक्षरं निरूप्यास्य, ग्रंथमानं विनिश्चितं । शतानि नव पंचाशदधिका पंचभिस्तथा ॥ ग्रंथाग्रं ९५५ ॥ यदक्षरं परिभ्रष्टं मात्राहीनं च यद्भवेत् । क्षंतव्यं तद् बुधैः सर्व्वं कस्य न स्खलते मनः ॥ ११ ॥ संवत् १३३४ वर्षे द्वि फागुण वदि ११ शनावद्येह श्रीमत्पत्तने महाराजश्रीसारंगदेवराज्ये श्रीसंघेन शतकटिप्पनकं लिखापितं । ठ० लाषणेन लिखितं ॥

## ४६९१ श्री. उ. फो. जै. ध. अमदावाद.

श्रीपर्युषणकल्प. ता. प्र. ५

वंशे नागरसंज्ञे वाहडनामा बभूव सुश्रेष्ठी । सद्धर्मकर्मनिरतो विरतोऽपरदूषणग्रहणात् ॥ १ ॥
आनंदो नंदनस्तस्य । सद्धार्मिकशिरोमणिः ॥ येन पिल्लाहिका ग्रामे जैनमंदिरमुद्धृतं ॥ २ ॥
पत्नी ह्यनुपमा तस्य, संजज्ञे गुणधारिणी । सद्धर्मवासितस्वांता, कान्ता स्वजनसंततौ ॥ ३ ॥
तयोः पुत्रत्रयं जज्ञे, जिनधर्म्मपरायणं । आद्यो धांधा द्वितीयस्तु, सुश्रेष्ठी रत्नसंज्ञकः ॥ ४ ॥
तृतीयश्च जगत्सिंहो, न्यायवान् गुरुपूजकः । तत्र पूर्वः सुतस्तस्य, श्रेयोऽर्थं शुद्धभावतः ॥ ५ ॥
सार्वज्ञशुद्धसिद्धांतलेखनोद्यतबद्धधीः । श्रीपर्युषणकल्पस्य लेखयामास पुस्तिकां ॥ ६ ॥

## ४६८१ श्री. उ. फो. जै. ध. अमदावाद.

श्रीपर्युषणकल्प. ता. प्र. ६

पर्युषणा ग्रंथाग्रं १२१६ संवत ९२७ वर्षे आषाढ सुदि ११ बुधे.

## ४६९२ श्री. उ. फो. जै. ध. अमदावाद.

श्रीकल्पसूत्र. ता. प्र. ७

संवत १४२१ वर्षे विशाख सुदि पंचमी दिने श्रीमदणहिलपत्तने श्रीकल्पपुस्तिका पं. महिपाकेन लिखिता ।

## ४६९३ श्री. उ. फो. जै. ध. अमदावाद.

श्रीकल्पसिद्धांत. ता. प्र. ८

वंशः प्राग्वाटनामोदयगिरिरसकौ तत्र भास्वान्नवीनः,
संजातो धांधसंज्ञः स्वजनजन मनःपंकजानां प्रकाशी ।

प्रस्तप्रातप्रचारा गुरुगुरुचरणध्यानराचि समूहे ,
कुर्वन्ति शेपदायाकरनिकरच्छेदमुच्चैर्विरोगात् ॥ १ ॥
धाध्यमार्यादिल्हणदेवीपुत्रो समग्रगुणनिलयो ।
अर्जुन-झदसिन्सज्ञो पयो जिनो चतो नगति ॥ २ ॥
यत्रमार्जुनो ऽर्जुन इति प्रथितोऽर्जुनवर्णनात् विकाशकर ।
परमा मन वरचनामु चिर चतुरस्य यस्य चरति मन ॥ ३ ॥
परीभित्रशोद्धरणप्रवीणा, जयी चिर स्तात् स्वजनावतस ।
मुश्रावकश्रेणिषु दानदेवपूजादिभिर्मुख्यतमो ऽर्जुनोऽस्य ॥ ४ ॥
सौज यशीला सहजल्लदेवी, प्रिया प्रियालापपरार्जुनस्य ।
आस्त गृहे स्वस्तिमती मतीना, गृह गृहद्वारगतेव लक्ष्मी ॥ ५ ॥
अर्जुनस्य तनया परमौ ते, यान् निरूप्य विबुधा कथयति ।
पञ्चमुख किमु मुख प्रति देहव चकार सुभग पृथक् पृथक् ॥ ६ ॥
मुजालदेव प्रथम सतीता, पिया निर्विधिधवरो द्वितीय ।
गुणाकरोऽस्मो गुणपञ्चसनो घनाभिधो धन्यतमो जनेषु ॥ ७ ॥
कामार्थविव तौ मूर्ती, सांगागागाभिधौ सुतौ ।
अर्जुनस्य प्रियालापपरौ (वर्णित) बामनौ ॥ ८ ॥
श्रीपूर्णिमापक्षपय पयोधौ, बभूव चन्द्रा गुणचंद्रसूरि ।
सम्प्रीणयद् भव्यचकोरपूग, यो स्नानिभैर्या वचसा समूहे ॥ ९ ॥
पदे तदीये प्रबभूव भूरिसूरीश्वरस्थापनकृद् गणेन ।
गुणभमारया गुणरत्नराशिरनाकर कल्पमवर्णिताग ॥ १० ॥
श्रीगुणप्रमगुरुर्गुरुतायां, भाजन जनमनोऽब्धिशशाक ।
आत्मकार्यविमुख परकार्य, प्राणदानरसिक स बभूव ॥ ११ ॥
तत्पद्मपद्मकमलाद्दयेकहार , सार श्रुतेन गुणवान् गुणभद्रसूरि ।
सिद्धातमागरनिगाहनमदराभिमन्याबुधप्रकरबोधनवाल्सूर ॥ १२ ॥
श्रीगुणभद्रसूरीणा, स्फूर्तिमान् गुरुबाधर ।
मतिमम प्रभानाल्मासितावनिमडल ॥ १३ ॥
तस्य श्रीकल्पसिद्धातपुस्तक स्वस्तिकारक।
सांगागागानगम्भा, लेखयित्वार्पित नव ॥ १४ ॥
कुलादि पक्ष वेदेन्दु, संख्यया (१४२७) समयेगते ।
श्रीविक्रममहीपागत्, मासे माधसज्ञके ॥ १५ ॥

## ७००१ श्री. शांतिनाथजी ज्ञान भंडार. खंभात.

श्रीअध्यात्मोपनिषद्. ( योगशास्त्रस्वोपज्ञवृत्तिः ) ता: प्र. ९

इति. परमार्हतश्रीकुमारपालभूपालशुश्रूषिते आचार्यश्रीहेमचंद्रविरचिते अध्यात्मोपनिषन्नाम्नि संज़ातपट्टबंधे श्रीयोगशास्त्रे स्वोपज्ञद्वितीयप्रकाशविवरणं ॥ ग्रंथाग्रं ३१०० ॥ मंगलं महाश्रीः ॥ भद्रं ॥

आसीच्चंद्रकुलांबरैकतरणिः श्रीमानदेवाभिधस्तद्वंशे
प्रभुमानतुंगगणभृत् प्राज्यप्रभावः प्रभुः ।
तत्राजायत बुद्धिसागरगुरुः प्रद्युम्नसूरिस्ततस्तच्छिष्योऽजनि
देवचंद्रगणमृद्गच्छाग्रणीर्वि श्रुतः ॥ १ ॥

श्रीदेवचंद्रस्य मुनीश्वरस्य, जातौ सुशिष्यौ जगति प्रशस्यौ ।
श्रीमानदेवः प्रथमो गणेशः, श्रीपूर्णचंद्रो गणभृत्तथाऽन्यः ॥ २ ॥

यः सैद्धांतिकमौलिभूषणमणिर्विद्वज्जनाग्रेसरः,
संतोपोत्तमरत्नराजिततनुः श्रीमानदेवप्रभुः ।
यच्चेतः कलयापि नो विलिखितं संल्लापलीलावतीवे—
छलोचनचारुक्षितशरश्रेणिभिरात्मोद्भवः (वे) ॥ ३ ॥

श्रीपूर्णचंद्रसूरीणां, वादि गोवृंदनाशिनी ।
ब्रह्मनिघ्नापि साऽऽर्याद्वो, याऽसूत परमं वृषं ॥ ४ ॥

श्रीमानदेवसूरेः पट्टेऽजनि मानतुंगसूरि गुरुः ।
विधिरिव भवांतकारी, नरकद्वेपी स विष्णुरिव ॥ ५ ॥

अन्यच्च—

धर्कटवंशसुधानिधिचंद्रः, श्रेष्ठी गणियाको निस्तंद्रः ।
तस्य गुणश्रीः समजनि जाया, दक्षसुतेव सदैव विमाया, ॥ ६ ॥

तस्यांगजैका सुमहत्तरायाः, प्रभावतीसंज्ञमहत्तरायाः ।
पार्श्वेऽग्रहीत् पंच महाव्रतानि, प्रद्युम्नसूरेः सुगुरोः करेण ॥ ७ ॥

जगतश्रीरुदयश्रीः श्रीचारित्रश्रीमहत्तराः । क्रमेण तासां सर्वासां, पादपद्ममधुव्रताः ॥ ८ ॥

श्री निर्म्मलमतिगणिनीरस्यां श्रीयोगशास्त्रसद्वृत्तेः । द्वैतप्रकाशखंडस्य पुस्तिकां लेखयामास ॥ ९ ॥

श्रीमानतुंगसूरेः पट्टस्थितपद्मदेवसूरीणां । तां प्रवचनरसपात्रं प्रददौ पुण्याय पुण्यतरां ॥ १० ॥

कल्याणाद्रिनृपो धराधरसुता जाया कुरूमंत्रिणौ वृद्धा वृद्धनगा जनास्तदपरेऽपेक्षावसाराकराः ॥
चंद्रादित्यचवरौपदातिभगणाः साम्राज्यमेतत् क्षितौ । यावत्तिष्ठति तावदेव विबुधैर्वाच्या सदा पुस्तिका ॥

संवत १२९२ वर्षे कार्तिक शुदि ८ रवौ धनिष्ठानक्षत्रे । योगशास्त्रवृत्तिर्द्वितीय प्रकाशस्य लिखितेति ॥ शुभं भवतु ॥

## ४६८३ श्री. उ. फो जै ध. अमदावाद.

श्री दशवैकालिकसूत्रम् ता प्र १०

संवत् १२६५ वर्षे चैत्रसुदि ५ रवौ ॥ मगठ महाश्री ॥ द्विगुणवमवास्तव्यश्रीमाल वंशीयआद्या भार्या व्यव० चेला पौत्रेण व्यव० वउला भार्या धाधापुत्रेण देवकुमारेण निजमातु धनदेवीनामिकाया श्रेयोनिमित्त लखयित्वा दशवैकालिकपुस्तिका निजभगिनि येनगसुंदरगणिन्यै पठनार्थ प्रदत्तेति ॥

## ७००३ श्री जैनविद्याशाळा. अमदावाद.

श्रीसूर्यप्रज्ञप्तिवृत्ति ता प्र ११

इति श्रीमलयगिरिविरचिताया सूर्यप्रज्ञप्तिटीकाया विंशतितम प्राभृत समाप्त ॥
श्रीमज्जिनेश्वरविहारविराजमान सद्धर्मकर्मठजनव्रजजल्प्यमान ।
सौवश्रिया प्रतिहतामपुराभिमान ख्यात पहडाद्र नगर जयति प्रधान ॥ १ ॥
तत्रौस वशिविशेष शालिनि गिरिप्रामप्रतिष्ठे शुभेच्छाये पर्वशतप्रशस्तविभवे प्राग्वाटवशे ध्रुव ।
लापाह्व प्रथमभूत्र मौक्तिकमणि सद्वृत्तभाव श्रित,
श्रीमान् सज्जनमडन शुचिरुचिश्वासादिदोषोज्झित ॥ २ ॥
समो विजेतु पुरुषोत्तमस्य, सुदर्शन श्रीकलितस्य तस्य ।
पद्मासनाभोगविलासदक्षा, प्रिया गुणाढ्याऽजनि लक्ष्मिदेवी ॥ ३ ॥
तत्तस्मिन्मलधर्मकर्मनिरतो धर्माभिधानस्तयो । सजातस्तनय प्रशस्यविनय श्रीमानिरस्ताऽनय ।
आश्रय प्रतिपद्यपि प्रतिकृल साक्षर्यनिर्मर्यभाक्। यस्य स्पष्टमदीप्यतामृतरुचिर्नि शेषनरस्यत्तमा ॥४॥
षष्ठाष्टमादिकविचित्रतपोविधानव्याजर्णलाऽऽस्य ननु पुष्यति कामभिल्या ।
ससारसागरतरण्डमखडभाव । ससारतारणशत कृतवान् कृती य ॥ ५ ॥
श्रीमान् वयस्थो दयिताान्वितोऽपि च, महाव्रत ब्रह्मचर्यविशति ।
स एवयाव ह्यधिक प्रपाल्यन्न विस्मय कस्यमनस्यवीविशत् ॥ ६ ॥
श्रीशक्रस्तवपचकादिविधिना वाराश्चतुर्विंशति तन्वानो जिनवदनं प्रतिदिन यावद्भवाभिग्रहात् ।
सम्यक् यस्य सुधी शतत्रयमितैर्या ज्ञानतैष्टकै रतमोदकमाहितैर्विहितवानुद्यापन पुण्यवान् ॥ ७ ॥
इम सतीचक्रशतत्रनू रत्नूरतूतुपश्रितुपशीलमूर्तिप्रिया ।
गुणा यदीया हृदयगमा सता श्रयन्ति यनस श्रवणावतसता ॥ ८ ॥

इतश्च—

श्रीमत्तपागणनभोगगनभास्कराणा सिद्धान्तवारिधिविगाहनमदराणा ।
श्रीदेवसुदरगुरूत्तमपट्टमार्गा, सोमसुदरमुनीश्वरसूरिराजा ॥ ९ ॥

पियूपदेश्यामुपदेशभारतीं, निशम्य सम्यक्श्रुतभक्तिभावितः ।
ग्रंथं सलक्षद्वयमानमात्मनः, पुण्याय धन्यः स्वधनेन लेखयन् ॥ १० ॥
सोमवसुमनु (१४८१) मितेऽब्दे श्रीचित्कोशे व्यलीलिखत् योऽदात् ॥
यावद् व्योमा........सहृदयानंद कंदांबुदः ॥ शुभं भवतु ॥

## ५२१८ श्री. शांतिनाथजी ज्ञान भंडार. खंभात.

श्रीपंचमस्थानव्याख्या. ता. प्र. १२

श्रीलक्ष्मीतिलको मुदेऽस्तु भगवान् श्रीन्यायतुर्याभिमाख्याये
भूमिगृहे स्थितानपि रहस्यार्थान् ममाद्योतयन् ।
श्रेयःस्नेहवराक्षयो न च मनाक्कंप्योऽपि दुर्वादिवाग्वा-
तैरव्ययसदृशःखलु नवो यद्गीःप्रदीपोदयः ॥ १ ॥

प्राक् संहत्य सुरासुरेण जलधिं व्यालोड्य हेमाद्रिणोद्भृतं सारमुपाददे स्वयमहो एकांगमल्लस्तु यः ।
न्यायांभोधिममुं विगाह्य परितो बुद्ध्या कुशाग्रीयया, सामाख्येन महार्थसारमचिराल्लात्वा व्यतारीन्मम २
तस्य श्रीजिनरत्नसूरिचरणांभोजांतिकेऽधीतिनः श्रीलक्ष्मीतिलकाभिषेकनृपतेर्नानार्थरत्नैरलम् ।
कुर्वाणात्र सुवर्णदंडरुचिरा दुर्गार्थवृत्ते र्च्छलादेतस्या मयकोच्छ्रितोज्ज्वलयशः श्रीवैजयंत्युच्चकैः ॥ ३ ॥

इति युगप्रधानश्रीजिनेश्वरसूरिशिष्यलेशश्रीअभयतिलकोपाध्यायनिर्मितायां पंचमस्थान-न्यायमहातर्कविपमपदव्याख्यायां पंचमाध्ययः समर्थितः ॥ नमोऽस्तु श्रीपार्श्वनाथाय ॥ नमः श्रीजिनदत्तसूरिचरणकमलेभ्यः ॥ सर्वदा सुप्रसादास्तु श्रीशारदा महादेवी ॥

चान्द्रेकुलेऽजनि जिनेश्वरसूरिरिन्दुर्हत्वा तमो वसतिमार्गविकाशकारी ।
भेजे ततोऽभयगुरुश्च नवांगटीकापीयूपकुंडनवकोद्धरणः श्रुताब्धेः ॥ १ ॥
जज्ञे तदीयपदवीनलिनीमरालः स्थेयेश्चरित्ररमया जिनवल्लभाख्यः ।
आसीत्पदेऽस्य जिनदत्तगुरुर्भटेन, येनादधे विधिपथःसुवहः खिलोऽपि ॥ २ ॥
आसीत्पदेऽस्य जिनचंद्रगुरुश्च पंचविंशो जिनो य इह सर्वजनेन गीतः ।
तस्मादुदैज्जिनपतिर्यतिराड् जयश्रीगाढोपगूढपरिमाद्यदमन्दमोदः ॥ ३ ॥
शिष्या स्तस्य जिनेश्वरो (?) सकृतसम्राजो जयंत्यंजसा सुव्यक्तैव सरस्वतीपरिवहोच्चैर्न्यायघंटाध्वनः ।
उत्सर्पोत्सवसंहतिर्जिनगृहेषु स्वर्णकुंभच्छलात्, पृथ्वी हेम फलैः फलति भुवनं यत्कोदये मोदते ॥ ४ ॥
विद्यालब्धिक्रियाभिस्त्रिजगदधिभुवा सुप्रसन्नैव तेषां,
हि नयमहातर्कशकेण टीका प्रोद्बाहिताऽसावपि साकं ।
पुंमात्रेणांगजास्ता वत वत मयका निर्द्धनेनापि बुद्ध्या,
तस्याभिप्रायवृत्तिर्भवतु सहचरी याव(द्विन्द्व)र्कयोर्भा ॥ ५ ॥

श्रीमल्ललक्ष्मीतिलकोपाध्याये शोधितेयमतिनिपुण । अ यदपि यच्च शोध्य तदत्र शोध्य महाकुशलै ॥

श्रीकेशवंश एव हि जयतादिह कल्पपादपे पूर्ण ।
कलिकालेऽपि सदा य सर्वेषा पूरयत्याशा ॥ १ ॥
प्रगुणगुणमयोऽत्र पार्श्वनामा ध्वनकमला कल्याचकार साधु ।
स जयति युग मृगाकम यो मधुरयश कलकिंकिणीप्रगाने ॥ २ ॥
अथारो मानदेवः कुलधर बहुदेवोपशोवर्द्धनोऽन्य,
श्रीमर्तुर्बाहुभूत्ता अजनिषत सुता धर्म्मकर्म्मप्रवीणा ।
सत्पुत्रा मानदेवाद् य इहधनदेवस्तथा राजदेवो
निर्वाहश्चाविरासन् हिमगिरित इव स्वर्गसिंधुप्रवाहा ॥ ३ ॥
देवधरलोहदेवौ, जातौ कुलधरांगजो । यकाम्या कुडलाभ्या, पुण्यश्री समभूष्यत ॥ ४ ॥
विभेजे (च ?) निचंद्रमा जिनपतिः पुत्रो यशोवर्दनक्षीराम्बेर्जिनचद्रविष्णुपदमाकात नितात महत् ।
बालेनापि हि येन साधुषु बहु योतिष्पु राज्य दधे[ऽधे]
शेषाना शिरसि स्थित पितृकुल विश्वच सप्रीणित ॥ ५ ॥
संनते बहुदेवसाधुनृपते पद्माकरस्यागभः,
पद्मामो गुरुदेवपादकमलार्चाऽभि कृतार्थ जनु ।
कुर्वाणो जयदेवसाधुरमलो लक्ष्मास्वधुर्यप्रियाव्याजेन
ध्रुवम यह तमभजल्लक्ष्मी स्वय देवता ॥ ६ ॥
ललिका चापरा वल्लभा शोभते पचपरमेष्ठिपददेमपचेटकै ।
आरम यत्र यस्या रसज्ञा सदा लाहिनी चापि पुत्री रसज्ञा मुदा ॥ ७ ॥
लक्ष्म्या क्षपोर्व्या जयदेवसाधुरजीजनच्चाक्षतबोधिबीज ।
पुर प्रकाडो वरदेव–धाघौ, शाखाकुलधारकरो ह्यसाधू ॥ ८ ॥
तत्राद्योऽजनि धार्मिको मतिमता सीमा मतिप्रेक्षिणा
दीक्षादानगुरुर्मदोदयदवोलक्ष्म्या प्रियो नदन ।
श्रीमावालिपुरेऽत्र देवगृहिका पार्श्वस्य वीरेशितुर्थेये
य सममूत्रयत्ति जयदा श्रीकैलिशैलोपमां ॥ ९ ॥
देवार्चा निपुणा च पंचपरमेष्ठिध्यानदानक्षमा, हर्मैर्मत्यपरोपकारमधुरालापादिकै सद्गुणै ।
यं लोकोत्तरमारचय्य नराऽमा य व्यलोलुप्यत श्रद्धा कार्तयुगेषु पुसु विधिना धान्धो द्वितीयस्वसौ ॥
आद्यासीद्वरदेवसाध्वधिपते प्रल्हादनस्यागजा ।
जाया चाहिनिका निकाममधुरालापा सुमाया प्रपा ।
सैषाऽमूत [सुतौ] सुतं विमलचंद्र विषचद्रोदय,
साउदयट नामिकं च तनये श्रेयःश्रिय शेवधी ॥ ११ ॥

हर्षाब्दो विमलो जिनेश्वरगुरोः पार्श्वे सुवर्णैर्धनैः.
वर्षन्नृत्यति रत्नवृष्टितनयां प्रव्राजयन्नुत्सवैः ।
श्रीप्रल्हादन पत्तने जिनपतिं शांतिं प्रतिष्ठापयन्,
विष्णवादीन् पुरुषोत्तमान् किल दशामद्यापि चक्रेऽतिथीन् ॥ १२ ॥
श्राद्धाः सन्ति महर्द्धिका निजगुरोर्भक्तानुभक्ता घना
स्तकोर्क्तिप्रविधायिनोऽप्यथ सदा तत्पर्युपास्त्यादृताः ।
स्वप्राणानधिरोपयन्निजगुरोः कार्ये तुलायां तु योऽ-
थैकोऽयं विमलेंदुरेव स इति प्रोत्क्षिप्य बाहू ब्रुवे ॥ १३ ॥
प्रिया द्वितीयाऽस्य राजूर्दानशीलतपोगुणाः ।
यदंगजाः प्रणंदंति भावनाः स्वसुराशिपा ॥ १४ ॥
षट् पुत्रा गुणचंद्रको भुवनचंद्रो हेमचंद्र स्तथा. .... .... .... .... .... अपूर्ण.

## ७८८२ श्री जैनज्ञान शाळा. वीजापुर.

श्रीसूक्ष्मार्थविचारसारप्रकरणचूर्णिः ता. प्र. १६

इति श्रीमुनिचंद्रविरचिता सूक्ष्मार्थविचारसारप्रकरणचूर्णिः समाप्तेति ॥ ग्रंथाग्रं २८७३ ॥
संवत १४९८ वर्षे फागुण वदि १४ रवौ मह सांगा लिखितं ॥ श्री ॥
आकरो नररत्नानां, कीर्तिकल्लोलिनीपतिः । श्रीमानूकेशवंशोऽस्ति, रत्नाकर इवापरः ॥ १ ॥
श्रेष्ठी तस्मिन्नुदेति स्म, प्रतिष्ठावल्लिमंडपः भादाभिधानः श्राद्धानां, धोरणीषु धुरंधरः ॥ २ ॥
सचिवेंद्रस्य तस्यासीत्, सहजूः सहचारिणी । गंगातरंगा यच्छीलभंगीमंगीकरंति चेत् ॥ ३ ॥
तयोस्त्रयस्त्रपोपेतधियोऽमी तनयोत्तमाः । धना भीमाभिधौ डांटाकश्चेति प्रगटप्रभाः ॥ ४ ॥
सधर्मचारिणी तेषु, धनसाधोरजायत । मारुसा रूपकलया रंभासारूप्यधारिणी ॥ ५ ॥
शुक्तिर्मुक्ताचयमिव, द्यौरिव ग्रहमंडलं । रत्नगर्भेव रत्नौघं, सा प्रासूत सुतद्वयं ॥ ६ ॥
मेघाभिधानः प्रथमः प्रथिष्ठपुण्यक्रियासाधनसावधानः ।
ववर्ष यो मेघ इवाखिलेषु क्षेत्रेष्वमात्रद्रविणांबुपूरैः ॥ ७ ॥
द्वितीयोऽद्वितीयः श्रीसदाकः सदनं धियां । तपसि ब्रह्मचर्ये च, तुल्यो यस्यास्तु कोऽधुना ? ॥८॥
कमला केशवस्येव, शिवस्येव शिवाऽथवा । मेघाकस्य प्रियतमा, भोली नामाऽऽदिमाऽभवत् ॥९॥
तत्पुत्रोऽजनि माणिक्यश्चा(णा)क्य इव बुद्धिमान् । कमलाई द्वितीयास्ति, हीरो वीरश्च तत्सुतौ ॥१०॥
व्यवहारिहारिहारिणि, निवसन् श्रीस्तंभतीर्थवरनगरे । प्रथमाऽभिधेयतामयमवाप मेघाभिधः कृतिनां ॥
श्रीपावकाचलशृङ्गारश्रीशंभवजिनालये । तेनाष्टौ देवकुलिकाः, कलिकालहृताः कृताः ॥ १२ ॥
संसारपारदस्य श्रीसोपारकपुरेशितुः । सोऽपारद्रविणैर्जीर्णचैत्यं चक्रे पुनर्नवं ॥ १३ ॥
चतुर्विंशतितीर्थेशप्रतिमा मतिमानसौ, दृष्टमात्रकृतोद्वेगविरमा निरमापयत् ॥ १४ ॥
स्पर्द्धयाऽहूयमानेव ज्योत्स्ना यौज्ज्वल्यशालिनी । सुरत्राणपुरे शाला, विशाला तेन निर्ममे ॥१५॥

चतुर्विंशतिवारांश्च, माहिन्द्रितटिनीतटे । अकारयदमारिं य सर्वा मारिं न्यवारयत् ॥ १६ ॥
अमात्रास्तीर्थयात्राश्चाऽनवा श्रीसंघभक्तय । यास्तेन तेनिरे कस्तद्व्यक्ति वक्तुमल भवेत् ॥ १७ ॥

श्रीमत्तपागणनभोङ्गणभास्कराणा श्रीसोमसुंदरयुगोत्तमसूरिराजा ।
सम्यग् निशम्य श्रुतभक्त्युपदेशमेवमुल्लासित प्रमदमेदुरितादरेण ॥ १८ ॥

श्रीसिद्धातादिकग्रथलक्षं लेखयताऽमुना । तेन श्रीमेघनादेन, लेखित पुस्तकोऽप्यसौ ॥ १९ ॥
चिकोशस्थानके सोऽय रोपित कृतिनाऽमुना फलतात् ज्ञानकल्पद्रुर्विरत्यादिफलोदयै ॥ २० ॥
अर्कैन्दुमडले यावद् व्योमश्रीकर्णकुण्डले । राजसरतावदेषाऽस्तु पुस्तिका स्वस्तिशालिनी ॥ २१ ॥
इति प्रशस्ति ॥

## ८०८६ श्री शांतिनाथजी ज्ञान भंडार. खंभात.

**श्रीउत्तराध्ययनटीका.** ता. प्र १७

स १३०८ वर्षे ज्येष्ठ वदि ७ बुधे । नमो जिनागमाय ॥
प्रशस्यधर्मप्रभव सुपर्वा, विशाल शाखो वरपत्रशोभ ।
महीभृता मौलिषु माननीय, श्रीधर्कटानां प्रथितोऽस्ति वश ॥ १ ॥
साढाकनामा सुविशुद्धमध्यश्चासादिदोषै परिवर्जितश्च ।
अजायतास्मिन् कुमुदावदातो, मुक्तामणिर्भास्वरकातिदीप्र ॥ २ ॥

समुद्र इव गभीर, शशाक इव शीतल । दानवर्षी गजइव, साढाक श्रावकोऽभवत् ॥ ३ ॥
साढाकस्य सुता पंच, जज्ञिरे पाडवा इव । येऽर्थि सघातनातानां कौरवाणां क्षय व्यधु ॥ ४ ॥
सर्वेऽपि धर्मरसिका, सर्वेऽपि हितभाषिण । पुमर्थसाधनपरा, सर्वे जनहितैषिण ॥ ५ ॥
आद्य आशाधरस्तेषा, प्रमुखो गुणशालिना । महीधरो द्वितीयस्तु, गुणग्रामैकमंदिर ॥ ६ ॥
वोल्हाकनामा समभूत्तृतीयो हारवद् गुणी । शशाककाशकाशयशा पूरितभूतल ॥ ७ ॥
यशोवीरश्चतुर्थोऽभूद्दानेश्वरशिरोमणि । लोकोत्तरचरित्रोऽभूत्पचमः पाजडस्तथा ॥ ८ ॥
महीधरस्य संजज्ञे, सजातोऽन्यल्पपुत्रका । गेहिनी देहिनीव श्रीर्महाश्रीरिति सज्ञिता ॥ ९ ॥
केल्हणो नाम सनज्ञे, तनय सनयस्तयो । सद्गुरुचरणद्वद्वसमाराधनतत्पर ॥ १० ॥
अजायत प्रिया तस्य कमलश्रीर्महाशया । सत्यापितसुभद्रादिसतीलोका गुणैर्निजै ॥ ११ ॥
सागरा इव लावण्यकलिताश्चतुराशयाः । अजायत सुधर्मिग्रथ वारस्तनयास्तयो ॥ १२ ॥

चदनादपि मनोज्ञवागभूदाद्य एष वडुकस्तत पुन ।
रासल: सहजधर्मकर्मठो येसलस्तु गुणराशिपेशल ॥ १३ ॥
गागकस्तदनु गागवारिणा, सन्निभ शुचितया विचक्षण ।
देवपूजनरतो निरतरं, वासनारसनिवासमानस ॥ १४ ॥

वल्लभास्तदनु जज्ञिरे क्रमात्, शीलभूषणविभूषितांगकाः ।
भर्तृपादपद्मैकदृष्टयो मूर्तिभाज इव संगताः श्रियः ॥ १५ ॥

पत्न्योऽभूवन् कुलोत्पन्नाः, निःसपत्नाःप्रियंवदाः पद्मश्रीश्चेति राज्यश्रीर्लक्ष्मीः श्रीरिति संज्ञिताः ॥१६॥
पद्मश्रियास्त्रयः पुत्राः, संजाताः शुद्धबुद्धयः । प्रवाहा इव गंगाया, जगतीपावनक्षमाः ॥ १७ ॥
प्रथमो मोहनस्तेषां, जनमानसमोहनः । द्वितीयो विजयपालो, बालोऽपि हि महामतिः ॥१८॥
तृतीयो लिंबदेवाख्यो मातुरत्यंतवल्लभः । सहकारसमाकारो, निवासः संपदामिव ॥ १९ ॥
आल्हुका च सुता जाता, बाल्यादपि महासती । तपःकर्मणि सर्वस्मिन्निरता विरता भवात् ॥२०॥
द्वितीया महणू नाम, संजाता तनया तथा। राज्यश्रियाः सुता जाता, वउलूनाम विश्रुता ॥ २१ ॥
श्रियां च तनया जाता, गोसली नाम रुपभाक् । प्रवर्द्धमाना चंद्रस्य, कलेव विमलाकृतिः ॥२२॥
तथा–यशोवीरस्य संताने, सुतो नरपतिस्तथा । शिरपालश्च संजातः, शांतिगस्तत्सुतोऽभवत् ॥२३॥
पाजडस्य प्रिया जज्ञे, जयश्रीर्नाम विश्रुता । तया सुतद्वयं जातं, छाडा आसलनामकं ॥ २४ ॥
छाडाकस्य प्रिया जज्ञे, लीलीरिति विशालवाक् । आसलस्य तथा जाता जाया आसमतिः शुभा ॥२५

....सरलाशया । इत्यमेवमादि सकलं, साढाकस्य कुटुंबकं ॥ २७ ॥ इतश्च—
श्रीमान् सत्त्वगृहं गभीरिमनिधिर्निशेषभूषणैर्व्याकीर्ण्णः शुचिसाधुरत्ननिकरैः पाठीनपीठान्वितः ।
संसेव्यः सुमनोभिरक्षयगुणः ज्ञानामृतोत्कंठितै र्न....(धातचन्द्रगण).... ॥ १ ॥

अद्भुतयशोवादिसूरि स्ततश्च।सूरिःश्रीसर्वदेवस्तदनु समभवद्वादिवृंदैक वंद्यः,
श्रीमान् प्रद्युम्नसूरिः सकलकलिमलक्षालने वारिपूरः ॥ २ ॥

इत्येवमादिप्रमुखेषु सूरिवर्येषु गच्छत्सु कथावशेषं। भद्रेश्वरसूरिरजायतास्मिन्........भवत् ॥ ३ ॥
अक्लेशेन बभार मारविजयी श्रामण्यभारं पृथग्भागीकृत्य सुदुर्वहं स्ववपुषा सैकादशांगेन यः ॥ ४ ॥
श्रीसिद्धसेनसूरिस्तत्पट्टविशेषको जयति यस्य । कलिकोपमान सहिता दशनावलिरेव न तपःश्रीः ॥५॥
.... ....विंदप्रतिबोधहेतुः । ततो विवस्वानिव मानदेवः सूरिर्यशःपूरितदिग्वितानः ॥ ६ ॥
ततोऽभूच्चारुचारित्रचर्यामर्यो दयांबुधिः। श्रीमद्रत्नप्रभाचार्यो धुर्यो माधुर्यशालिनां ॥ ७ ॥
तत्पादांभोजभृंगः प्रवरगुणयुतः सर्वसिद्धांत वे( त्ता )........हतवपुः शर्करामिष्टवाक्यः ।
न्यासः श्रेयः शिवश्री दिशतु भुवि सदा सूरिदेवप्रभोऽयं ॥ ९ ॥

व्याख्यास्यतस्तस्य गुरोर्मुखाब्जात्, जैनागमं संसदि साधुवृत्तः ।
कुटुंबयुक्तः कटुको महात्मा, शुश्राव सिद्धांतरहस्यमेतत् ॥ १० ॥

चक्रे मुक्ति....त्रैलोक्यलक्ष्मीरपि स्वायत्ता विदधे च दुर्गतिगतिस्तेनैव रुद्धात्मनः ।
येन स्वं भुजपंजरार्जित मिदं वित्तं गुरोराज्ञया, सिद्धांताद्भुतपुस्तकस्य लिखने साफल्यमारोपितं ॥११॥
इत्याकर्ण्य वचः सुधाकवचितं वक्त्रांबुजात् सद्गुरोः साधुः साधितमुक्तिमार्गमतिकः सद्भावनाभावितः।

वर्षे सिद्धिवियत्कृशानुविधुभिसंख्या (१३०८)कृते श्रेयसे,
पित्रो सुदरसुत्तराध्ययनकं मथ मुदाऽलीलिखत् ॥ १२ ॥

न केवलं पुस्तकमेकमेव, विलेखयामास धूप धाटि नालिकेर-कलित चद्र प्रभाव दर्गं ॥
यावन् मेरुकरे गभस्तिकटके घरतेऽथ पि यांगना ॥ तावन्नदतु पुस्तकं सुगुरुभिर्व्याख्यायमानो बुधै ॥
॥ मगलमस्तु ॥ प्रशस्तिरियं कृता लिखिता च श्रीरत्नाकरसूरिणा ॥

## ८०८४ श्री शांतिनाथजी ज्ञान भंडार, खंभात.

**श्रीरत्नचूडकथा,** ता प्र १५

पूजादिविधानफल समाप्त ॥ रत्नचूडकथा ॥ सवत १२२१ ज्येष्ठ सुदि ९ शुक्र दिने अद्येह श्रीमदणहिल्लपाटके महाराजाधिराजजिनशासनप्रभावकपरमश्रावकश्रीकुमारपालदेवराज्ये श्रीचड्डापल्या च श्रीकुमारपालदेवधारवर्षनरेश्वराज्ये श्रीचक्रेश्वरसूरि-श्रीपरमानंदसूरिप्रमुखउपदेशेन श्रीचड्डापल्लिपुरीवास्तव्य श्रे०पूना श्रावकेण आशाचंद्र-आशापोइणि-छाहिणि-राजू-प्रमुखमातु-प्रसमेतेन इदं ज्ञाताधर्मकथा-रत्नचूड कथापुस्तक लिखितमिति

शिवमस्तु सर्व्व जगत. परहितनिरता भवन्तु भूतगणाः ।
दोषा प्रयातु नाश सर्व्वत्र सुखीभवतु लोक ।

**श्रीपरमानदसूरिश्रीयशःप्रभसूरीणां ॥**

## ८०९० श्री शांतिनाथजी ज्ञान भंडार, खंभात.

**श्रीउपमितिकथा.** ता प्र १६

श्रीमालाचलमौलिमूलमिलितश्रैलोक्यमुक्ताचित, पर्व्वालि कलित सुवर्णनिलयः प्रासाद कल्पाकृम ।
लीनालीम्यकुल प्रलीनकलुष सुभ्रातृपुत्रानुगो वंशोऽस्ति प्रकट सदौषधिनिधि श्रीपर्कटानो पद्मः १
सारासारविचारचारचतुर सारार्थबद्धादर, संसारोदरवर्तिजंतुशरण श्रीमज्जिनार्चापर ।
करुण्याकरसद्गुरु(सु)तिवशप्रासार्थदानोद्यतस्तत्रा मयीपुलकमोचितरस सज्जेमिचद्रोऽभवत् ॥ २ ॥
तस्यानघा धनपयोधरयुग्मरम्या, शुमानुरूपगुणरंजितभर्तृचित्ता ।
चिंता यतः तफलदायकधर्मलीना, निर्वाणि नाम विदिता जनतासु पत्नी ॥ ३ ॥
जीवाजीवपदार्थसार्थवचन संपूर्णचंद्रानन, सर्वाधीनघन सलीलगमनः श्रीक्षेमपचानन ।
नैपुण्यार्जितसज्जन प्रतिदिन प्रारब्धदानावन, सूनु श्लाघितसर्व्वदेव भुवनख्याताभिधानस्तया ॥४॥
दैवेन केनापि कदाचिदेष नीतो रजन्यां स्वगृहात् प्रसुप्त ।
अष्टापदे वंदितसार्व्वनेशान् प्रात स्वहस्त कुसुम ददर्श ॥ ५ ॥
सदा दानासक्ता स्वकुलभिमलाचारनिरता, सुशीलप्रख्याता परहितरता दैन्यरहिता ।
समानाविर्भ्रांता गुणगणयुता सज्जनमना । सदच्छश्री नामारर सहचरी तस्य च तयोः ॥ ६ ॥

लक्ष्मीपतिः सुतनयोऽजनि यक्षदेवः, श्रीराजिनीनयनसम्मद आम्रदेवः ।
धांधी मनोभवनदीपकचांदिगाख्यस्तुर्यो यशोमतिवधूप्रियपुंडरीकः ॥ ७ ॥

चतुर्भिरेभिर्जिनधर्मलीनैर्वि भावितागाधभवाब्धिभावैः ।
व्यधायि धंधा(घंघा)णकसन्निवेशे, शरण्यचंद्रप्रभदेवहर्म्ये ॥ ८ ॥

प्रत्याख्यानं येन कृत्वैदनादेः,पद्भ्यां निग्जत्यो (त्रिर्गत्याऽप्यो) ज्जयंते नगेंद्रे ।
श्रीमन्नेमिर्वंदितः पूजितश्च, क्षिप्रं भूयात् यक्षदेवः स सौख्यी ॥ ९ ॥

यक्षदेवस्य तस्योद्यमी जातवान्, चारुपुत्रः प्रियः शांतनामादिमः ।
धर्म्मकर्म्मसुशीलाऽऽम्रदत्ताभिधः । क्रोधकोपाजितः कामरूपोऽजितः ॥ १० ॥

धर्म्मार्थादिचतुः प्रकारपुरुषस्वार्थोद्यतस्यान्यदा, द्वौ द्वौ सुंदरभार्ययोर्वरसुतौ श्राद्धाम्रदेवस्य तौ ।
संजातौ कुलजः श्रियः सुसरलौ पार्श्वाख्यमृणागकौ ।
राजन्यो बुधलक्ष्मणो गुणनिधिर्नागेंद्रनामानघः ॥ ११ ॥

सन्नेमिचंद्र गुणमंदिर देवचंद्रसू नुद्वयं व्यजनि चांदिगनामधेयः ।
प्रद्युम्नशंवकृतनामकसुज्ज्वलांगं, सत्पुंडरीकसुधियाऽजनि पुत्रयुग्मं ॥ १२ ॥

नागेंद्रः शुभधर्म्मकर्म्मनिरतः सन्मोहिनी भार्यया, पद्मावत्यभिधातया सरलया स्वस्त्रीयया संयुतः ।
चाहिन्या सुतया सुतेन गुणिना सुश्रीकुमारेण वै । शांतापत्ययशःप्रियानघयशोदेवेन धर्मार्थिना १३

अथान्यदा दानतपोविधानसुभावना शीलसनाथधर्म्मे ।
जिनप्रणीते विदधत् प्रयत्नं, शृणोति धर्म्यं वचनं गुरुभ्यः ॥ १४ ॥

तद्यथानिरवधि भववार्द्धौ कर्म्मदोषाद् भ्रमंतः, प्रवरशरणहीना योनिलक्षेषु जीवाः ।
कथमपि त्रुटियोगान् मानुषं जन्मरत्नं, सकलगुणविशिष्टं कष्टलक्षैर्लभन्ते ॥ १५ ॥

प्राप्य तत्प्राणिभिः प्रार्थितार्थप्रदं प्रेरणाप्रोद्यतप्रांजलप्रेरितैः ।
प्रत्यहं चिन्तयित्वा धनाद्यस्थिरं, कर्तुमेवोचितं चारु जैनं वचः ॥ १६ ॥

प्राणातिपातविरतिप्रमुखानि यानि, जैनागमे निगदितानि महाव्रतानि ।
तानि क्षमा यदि न कर्तुमशक्तियोगाद्यूयं कुरुध्वममलं गृहिधर्म्ममेनं ॥ १७ ॥

कर्तव्यं जिनपुंगवस्य महनं स्तोत्रैश्च तत्संस्तवः सेव्यः साधुजनः प्रसन्नवदनैः श्रव्यं जिनेंद्रोदितं ।
चिंत्या द्वादश भावना निजहिते कार्यः प्रयत्नो महान्,
शक्त्या चान्यहिते भवाब्धितरणप्रत्युद्यतैः प्राणिभिः ॥ १८ ॥

मोहादिद्विपकुंभभेदनविधौ येषां सदा पौरुषं, कामित्वं कमनीयमुक्तिललनापीनस्तनस्पर्शने ।
न्यायोपात्तधनं गतं जिनमतक्षेत्रेषु सप्तस्वहो, तेषां पौरुषकामिता विभविता मन्ये कृतार्था भुवि ॥१९॥

रम्ये श्रीजिनपुंगवस्य सदने विंवे तदीयेऽनघे । संघे श्लाघ्यतमे प्रशस्तचरिते प्रोद्यच्च तुर्वर्ण्णके ।
सर्वज्ञागमलेखने विनिहितं वित्तं भवेत् पुष्टिदं,सत्य(त्)क्षेत्रे विधिनोप्तमिष्टसमये शाल्यादि बीजं यथा २०

ये कृत्वा जिनमंदिराणि विधिना संपूज्यवस्त्रादिभिः, श्रीसंघं समुपात्तनीतिविभवः श्रद्धापराः श्रावकाः ।

स्याद्वादप्रतिबद्धवाक्यजनकश्रीवीररागेण यतनिर्णीत किल लेखयति भविन किं किं न ते संकृत १२१
श्रुत्वा पुस्तकवाचनामनुदिन गृह्णति केचिद् व्रतं, देवाधीशजिनेंद्रपूजनपरा श्राद्धा भवेयु पर ।
अन्ये भद्रकभावभावितमन सद्धर्मयोग्या नरा, जायते खलु यस्य पुस्तकमिद हेतु स तत्श्रेयस ॥२२॥
इत्याकर्ण्य जिनप्रणीतमनघ धर्मं गुरुभ्यस्तत पर्यालोच्य कुटुंबकेन गुणिना नागेंद्रनामा गृही ।
सिद्धाल्येन कृता कथाप्रमितिं सिद्धातसारोद्धृता, तोपादेष सुधीर्व्यलीलिखदिमा स्वश्रेयसे पुस्तके २३
यावत् मेरु प्रतपति रविर्यौतते यावदिंदु र्यावद् वायु स्फुरति गगने तारका संति यावत् ।
यावद् भूमि प्रवहति पय सागरे यावदेतत् तावन् नद्याद् गुणिभिरनिश पुस्तक वाच्यमान ॥
॥ मगल महाश्री ॥

## ७९५७ श्री शांतिनाथजी ज्ञान भंडार, खंभात.

श्रीनिर्भयभीमव्यायोग । ता प्र १७

समाप्तोऽय निर्भयभीमनामा व्यायोग । कृतिरिय प्रबधशतकर्तुर्महाकवे रामचद्रस्य । यादृश पुस्तके दृष्ट, तादृश लिखित मया । यदि शुद्धमशुद्ध वा, मम दोषो न दीयते ॥ सवत् १३०६ वर्षे भाद्रवा वदि ६ रवावद्येह श्रीमहाराजकुलश्रीउदलसिंहकल्याणविजयराज्ये निर्भयभीमनामा व्यायोगो लिखित इति । शुभ भवतु लेखकपाठकयो ॥

## ७६२२ श्री जैनधर्म प्रसारक सभा, भावनगर.

श्रीउपदेशमाला । ता प्र १८

सवत् १३८२ वर्षे कार्तिक शुदि १३ शनौ, अद्येह श्रीदेवगिरौ साधुरामसिंहसुतसाधु तिहुणसिंहेन श्रीमदुपदेशमाला लघुपुस्तिका लिखापिता ॥

यादृश पुस्तके दृष्ट, तादृश लिखित मया । यदि शुद्धमशुद्ध वा, मम दोषो न दीयते ॥ मगलमस्तु ॥ शुभ भवतु ॥

## ७०२३ श्री शातिनाथजी ज्ञान भंडार, खंभात.

श्रीजंबुद्वीपप्रज्ञप्ति । ता प्र १९

ॐ नम । ओकेशवशे जगसिंहसाधोस्तनूद्भवोऽजायत साधुमुख्य ।
वदा यधुर्य पदमाभिधान, ख्यात पृथिव्या गुणगौरवेण ॥ १ ॥
प्रियाऽस्ति तस्यामलशीलभूषणेनाढ्कृता पूनसिरीति नाम्नी ।
तत्कुक्षिपाथोरुहराजहंसी, राजू प्रसिद्धाऽस्ति सुता सु(तु)तस्य ॥ २ ॥
४८ भरसाधु श्रीमाधरपतिर्गुणी । तस्यामभवत्तनूजन्मा, साधुगोलाभिधानत ॥४॥
तत्प्रियाऽजनि पूनाहि, पुण्यकर्मैकतत्परा । श्रीसर्वज्ञार्चने निष्ण, रौ(रा)ज्य नैत्रमंडना ॥ ५ ॥

तस्याः कुक्षिविभूषणं विजयवान् **श्रीआसधिरा**भिधः,

साधुः श्रीजिनशासनोन्नति........लं सर्वत्र यो गान्य(गीय)ते ॥ ६ ॥

मौनं पुण्यमिव प्रौढं, चतुरक्षि २४ जिनालयं । योऽचीकरत्तमांशत्रुंजयभूधर मंडनं ॥ ७ ॥

**स्तंभतीर्थपुरे, सोजींत्रिके, कावीपुरे** तथा । **टींवाख्य**(ख्ये च)पुरे, **हाथींदेणे नगर**केऽपि च ॥८॥

**अणहिल्लाभिधे** द्रंगे, तथा ग्रामे **वलासरे** । यः श्रीजिनगृहान्........निजं जनुः सदापियः ॥१०॥

तस्य संघपतेरस्ति सा **राजूः** प्राणवल्लभा । धर्मकर्मैकनिष्णाता, शीलालंकारधारिणी ॥ ११ ॥

श्रीमज्जिनेंद्रपूजाद्यैर्दानाद्यैरपि नित्यशः । कृतार्थयति यो जन्म स्वं नैकैः पुण्यकर्मभिः ॥ १२ ॥

इतश्च—

विश्वख्याततपागणा....दिनिखिलग्रंथार्थवित्स्वामिनः, सूरींद्रा विहरंति केवलमिलाजीवोपकाराय ये ॥१३॥

तेषां श्रीयुत**देवसुंदर** इति ख्याताभिधानां गुरू-

त्तंसानाममृतादतीवसरसां श्रुत्वा जवाद्देशनाम् ॥....साऽलेखयत् ॥ १४ ॥

॥ युग्मं ॥ श्रीसंघनृपस्यवासव....लिभर्ति दिन भोजीः...........

## ७०१५ श्री हुकममुनीजी ज्ञानभंडार. सुरत.

**श्रीपंचमस्थानविषमपदव्याख्या.** तां. प्र. २०

इति युगप्रधानश्रीजिनेश्वरसूरिशिष्यलेशश्रीअभयतिलकोपाध्यायनिर्मितायां **पंचप्रस्थान-**न्यायमहातर्कविषमपदव्याख्यायां **न्यायालंकाराख्यायां** । पञ्चमोऽध्यायः । समर्थितः । शुभं भवतु, सर्वकल्याणमस्तु ॥

यादृशं पुस्तके दृष्टं, तादृशं लिखितं मया । यदि शुद्धमशुद्धं वा, मम दोषो न दीयते ॥ १ ॥

स्वस्ति संवत् १४८० वर्षे अद्येह श्री । **डुंगरपुरनगरे राउल श्रीगइपालदेव** राज्ये **श्रीपा-र्श्वचैत्यालये** लिखितं **पचाकेन** ॥

## ७०२८ श्री शांतिनाथजी ज्ञान भंडार. खंभात.

**श्रीपृथ्वीचंद्रचरित्रम्** ता. प्र. २१

सम्वत १२१२ वर्षे ज्येष्ट सुदि १४ । गुरावद्येह **श्रीमदणसिंहहिल्लनयर** समतो (साम-न्तोपनमना) सेसमवि(धि)गत पं(च)महाशब्दवाद्यमानं चौलुक्यकुलकमलकलिकाविकासं **कन्नौ-**टरायमानमर्दनकरं **सपादलक्षराष्ट्रवनदहनदावानलंमालवे राष्ट्रे** निजाह्वया संस्थापनकरं **मूलराजपाटो-**द्वहनधुराधोरेयं पार्व्वतीप्रियवरलब्धप्रसादं इत्यादिसमस्तराजावलीमालालंकारविराजमान**श्रीकुमरपा-**लदेवविजयराज्ये तत्पादावाप्तप्रसादमहाप्रचंडदंडनायक**श्रीवोसरि लाट देश** मंडले **महीद( य )**

मुनयोरंतराले समस्तव्यापारान् परिपथयती येतस्मिन् काले जीर्णे(र्णो)रमामे नियमसजमस्वाध्याय ध्यानानुरतपरमभट्टारकआचार्यश्रीमदजितसिंहसूरिकृते श्रावकसोढूकेन परमश्रद्धायुक्तेन पृथ्वीचंद्र चरित्रपुस्तक विशुद्धबुद्धिना लिखापितं । लिखित च पडितमदनसिंहेनेति ॥ मगल महाश्री ॥

संवत् १४७८ वर्षे वैज्ञानिकशिरोमणिपू यप० शान्तिसुदरगणिपादे सर्वे चिकोश-कार्ये गजुकसमारचनादिमकारि, मारु(मृगु)कच्छकशालायाम् । श्रीसघस्य शुभ भवतु श्रीचित्कोशेन॥ प० शातिसुदरगणिभिश्चिकोशमजुकसमारचनादिकृ य विदधे ॥ श्री ॥

## ७०४८ श्री शातिनाथजी ज्ञान भंडार. खंभात.

श्रीसमय पर्वम् ( त्रिशष्टीय ) ता प्र २१

समाप्त चेद सप्तमं पर्व ॥ रामलक्ष्मणदशानना नमिस्तीर्थकृच्च हरिषेण वर्णिता श्रुति सुखाय सतु व ॥ प्रथामथ ३८८८ ॥ ■ १३१८ वर्षे ज्येष्ठ शुदि २ रवावद्येह श्रीसोमप्रतिपत्तौ ठकु० विफल्वसी लेखितेयमिति ॥

यादृश पुस्तके दृष्टं, तादृश लिखित मया । यदि शुद्धमशुद्ध वा, मम दोषो न दीयते ॥ लेखकपाठकयो ॥ शिवमस्तु सर्वजगत ॥ मगल महाश्री ॥ शुभ भवतु ॥

## ७९४७ श्री शातिनाथजी ज्ञान भंडार. खंभात.

श्री(समराइच्चकहा) समरादित्यकथा. ता प्र २१

वश श्रीपल्लिवालोऽस्ति, सशाख शतवर्धवान् । भूभृतोऽप्यधरीचक्रे येनैक उन्नितामना ॥ १ ॥

अजनि विनयपात्र तत्र पुरनचूडामणिमलिकीर्ति साददेवाभिधान ॥

निरुपमजिनराजरमेरपादारविंदाविचलविहितसेवावासविश्वमतिष्ठः ॥ २ ॥

शीलश्रनदशा साट्ट सज्ञिता तस्य वल्लभा । जिनक्रमयुगाम्भोजे यमनो हंसकायते ॥ ३ ॥

भ्राताऽभूत् साददेवस्य देवलः स यशील्ति । पद्मीनामधेयाऽथ, प्रिया तस्य विवेकिनी ॥ ४ ॥

आसीत्श्रेष्ठि(गु) साददेवतनुभूजाशोक नामा जिनश्रेणिष्यानिनिशा(णतेजि)तर्मतिप्राकाश्यनश्यत्तमा शाश्वयस्य यश प्रसूनमसम राकानिशानायकज्योति शालितनिर्मलाम्बर(तले)मोदाय यज्जातवान् ॥५॥

जाया तस्य जयतुका समभवद् दौनानुकंपारसासारासिक्तविवेककदठवन संस्तारनद्धादरा । निस्सयातजिनेश्वराहिन्सरुग् ध्वस्ताधकाराकुरे । यस्याश्चित्तगृहोदरे प्रतिपद धर्म सुख खेलति ॥६॥

पुत्रो लाखणसंज्ञितोऽजनि तयो पुण्यैकपात्रं कृती नीतिज्ञो विनयी नयी सुकृतज्ञो दश क्षमादक्षिण। येनोत्तुंगनिजान्वया (योन्वय) वयमहाप्रासाद स्फुट दिग्विस्तारि यशः सुकेतनपट प्रस्तारयामासिवान् ॥७॥

जाजाकस्याभवद् भ्राता जसपालाभिधः सुधीः । संतुका संज्ञिता तस्य दयिता दानशालिनी ॥८॥
जातौ तयोः सुतौ रत्नधनसिंहाभिधावुभौ । भगिनी जानुका नाम्नी बभूवाम्नायभूषणं ॥ ९ ॥
अथ—
जायाऽजायत लापणस्य कुलजा दानोद्यता रुक्मिणी, नाम्ना दीनसुवच्छ(त्स)लाऽन्वयविनी पुण्येंदिरा मंदिरे॥
यस्या मानसपंकजं त्यजति नो पक्षद्वयीनिर्म्मलो, धर्म्मो हंसयुवा युतो वरल(ट)या तीर्थेशभक्त्याख्यया ॥१०॥
नरपतिरिति नामा लापणस्यांगजन्मा, तदनु भुवनपालाख्यो यशोदेवसंज्ञः ॥
क्रमश इह तनूजा जज्ञिरे तस्य तीर्थाधिपतिसुगुरुपूजालब्धलक्ष्मीविकाशाः ॥ ११ ॥
जाल्हणदेवीति सुता जासी नामा तथा परा पुत्री । सद्धर्मकर्मनिपुणा कुरमादिमा दुहितरोऽभूवन् १२
आसीत् कुलीनचरिता नायिकदेवी नरपतेर्दयिता । अपरा च गौरदेवी तनुभूः सामंतसिंहाख्यः॥१३॥
यशोदेवस्य पत्नी सोहरा संज्ञयेति प्रतिजज्ञे । तस्याः समभूत् पुत्रः सांगणनामा स्फुरद्धामा ॥१४॥
प्रिया भुवनपालस्य पाउंदेवीति संज्ञिता । बभूव भाग्यभूः शीलरत्नरत्नाकरावनिः ॥ १५ ॥

मातुस्तातो राजपालाभिधानः मातुर्माता यस्य राणीति नाम्नी ।
मातुर्भ्राता राणिगो वूटडिश्च मातुः पक्षो लापणस्याघमुक्तः ॥ १६ ॥
श्रीमज्जिनेशप्रभुहस्तपद्माधिवासतोलापणनामधेयः ॥
तीर्थेशयात्रादिककर्म्मनिर्म्मलः, कुलप्रदीपः सुजनोपकारी ॥ १७ ॥
अथान्यदा लापण एप हृष्टः, सदृष्टशास्त्रार्थविनीतचेष्टः ।
भवस्वरूपं क्षणदृष्टनष्टं, विभावयामास निशावसाने ॥ १८ ॥
प्रातः प्रयातः सुगुरोः समीपे, तदेव तत्रैव तथा निशम्य ।
ततः प्रबोधार्कसुदृष्टवस्तुना, समाधिना ध्यायति सर्वमर्थदः ॥ १९ ॥

तथाहि—
देहं दुःखैकगेहं जलनिधिलहरीचंचलं जीवितव्यं, संपत्तिः प्राणभाजां प्रसृमरपवनोद्धूतकेतूपमेया ।
सौंदर्यं सुभ्रुनेत्रांचलललितसमं बंधुसंगोऽप्यनित्यो, जैन धर्मं विनाऽन्यत्रहि मनुजभवे शाश्वतं किंचिदस्ति॥२०॥
दानशीलतपोभावभेदैर्धर्मश्चतुर्विधः । मुख्यतो यतयो दानमेवैकं संप्रचक्षते ॥ २१ ॥
यद्यपि त्रिविधं शास्त्रे, तद्दानं ननु विश्रुतम् । तथापि ज्ञानदानात्तो, दानमन्यत् प्रशस्यते ॥ २२ ॥
ज्ञानं श्रुताश्रितं प्रोक्तं, श्रुतं शास्त्रमिति स्मृतं । तच्च द्विधा समाख्यातं, कल्पिताऽऽचरितक्रमात् ॥२३॥
तद्वयोद्योतितं किंचित्, चरितं मुनिरूपये । इति चिंतयतस्तस्य, स्मृतिगोचरतां गतं ॥ २४ ॥
चरित्रं समरादित्यभूभुजः प्रशमास्पदम् । संसारिजीववैराग्यरसनिस्यन्दभाजनं ॥ २५ ॥
(द्विपथ्याग्र) हुताशनं शमधूनीपूरार्णवं दुर्णयध्वांतध्वंसनभास्करं कलिमलप्रक्षालनैकामृतं ।
एतत्सच्चरितं सुचारु समरादित्येशितुः शास्त्रतो बद्धं श्रीहरिभद्रसूरिगुरुणा संवेगसंगाय नः ॥ २६ ॥
यदिष्टं वस्तु संसारे तदिष्टेषु नियोज्यते । अन्यदिष्टं हि ना दृष्टं, मातरं पितरं विना ॥ २७ ॥
मातुर्जयतुकाया निजपितृजाजाद्वयस्य पुण्याय । समरादित्यचरित्रं लेखितं लापणेनैतत् ॥२८॥

विषयजसुखमिच्छोर्गेहिनः क्वास्ति शीलं ? करणवशगतस्य स्यात्तपो वाऽपि कीदृक् ? ।
अनवरतमदभ्राऽऽरंभिणो भावना किं ?, तदिह नियतमेकं दानमेवास्य धर्म्मः ॥ १७ ॥

ज्ञानाभयोपग्रहदानभेदात् तच्च त्रिधा सर्वविदो वदंति ।
तत्रापि निर्वाणपथैकदीपं, सद्ज्ञानदानं प्रवरं वदंति ॥ १८ ॥
कलानुभावान्मतिमांधतश्च, तचाधुना पुस्तकमंतरेण ।
न स्यादतः पुस्तकलेखनं हि, श्राद्धस्य युक्तं नितरां विधातुं ॥ १९ ॥
एवं समाकर्ण्य सकर्णकर्णपीयूषपोपप्रतिमं सु (पु)त्रैः ।
तृतीयखंडं व्यवहारसत्कं, विलेखयामास सुपुस्तकेऽस्मिन् ॥ २० ॥

यावद् व्योमसरोवरे विलसतो विश्वोपकारेच्छया, सनक्षत्रसितांबुजौघकलिते श्रीराजहंसाविह ।
अज्ञानप्रसरांधकारविधुरे ।वश्वप्रदीपोपमस्तावन्नंदतु पुस्तकोऽयमनिशं संवाच्यमानो बुधैः ॥ २१ ॥

## ८०९२ श्री शांतिनाथजी ज्ञानभंडार. खंभात.

**श्रीपाक्षिकचूर्णिवृत्तिः** ता. प्र. २५

मंगलं महाश्रीः ॥ पाक्षिकचूर्णिवृत्तिः ॥ ग्रंथाग्रं ३१०० ॥ एकत्रिंशत् शतानि ॥ संवत् १२९६ विशाखसुदि ३ गुरौ इहैव वीजापुरे श्रीनागपुरीयश्रावकैः पौषधशालायां सिद्धांतशास्त्रपूज्य-श्रीदेवेंद्रसूरि ( राज्ये विजयचंद्र उपाध्याय वृद्धगच्छरापे ?) व्याख्यानतः संसारासारतां विचिंत्य सर्वज्ञोक्तं शास्त्रं प्रमाणमिति मनसा विनिंत्य श्रीनागपुरीयवरहुडीयासंताने सा० आसदेव सुत० सानेमट सुत सा० राहड सा० जयदेव सा० सहदेव तत्पुत्र सा० षेटा सा० गोसल सा० राहडसुत जिणचंद्र घणेसर वाहड देवचंद्र प्रभृतीनां चतुर्विध संघस्य पाठनार्थं वाचनार्थं च आत्मश्रेयोऽर्थं लिपापितं ॥

संवत् १४८९ वर्षे ज्येष्ट वदि ९....पत्र ३५४ मलधारनां वर्यः पृथुलसंचयः ॥ श्रीः ॥

अस्तीह श्रेष्ठपर्वप्रचयपरिचितः क्ष्माभूदाप्तप्रतिष्ठः
सच्छायश्चारुवर्णः सकलसरलताऽलंकृतः शस्तवृत्तः ।
पल्लीवालाख्यवंशो जगति सुविदितस्तत्र मुक्तेव साधुः,
साधुव्रातप्रणंता वरहुडिरिति सत्ख्यातिमान्नेमडोऽभूत् ॥ १ ॥
तस्योच्चैस्तनया विशुद्धविनयास्तत्रादिमो राहडो
जज्ञेऽतः सहदेव इत्यभिधया लब्धप्रसिद्धिर्जने ।
उत्पन्नो जयदेव इत्यवहितस्वांतः सुधर्मे ततः,
तत्राद्यस्य सदा प्रिया प्रियतमा लक्ष्मीः तथा नाइकिः ॥ २ ॥
आद्याया जिनचंद्र इत्यनुदिनं सद्धर्मकर्मोद्यतः,
पुत्रश्चारिणीसंज्ञया सहचरी तस्य त्वमी सूनवः ।

ज्येष्ठोऽभूत् किल देवचंद्र इति यो द्रव्य व्ययित्वा निज,
सप्तक्षेत्रेषु जिनाय सप्तपतिरित्याख्या मुदर्थमग्रहीत् ॥ ३ ॥
नामधराख्योऽथ महाधराख्योऽन्तो वीरधवलाभिधश्रीमदेवौ ।
पुत्री तथा धाहिणिनामिकाऽभूत्, सर्वेऽपि जैनाङ्घ्रिसरोजभृङ्गा ॥ ४ ॥
श्रीदेवभद्रगणिपादसरोरुहाणामिष्टया सभाद्विजयचंद्रमुनीश्वरस्य ।
देवेंद्रसूरिसुगुरोः पदपद्ममूले, तत्रातिमौ जगृहतुः यतिता शिवोक्तौ ॥५॥
नाइरेस्तु सुता जातास्तत्र ज्येष्ठो धनेश्वरः ।
खेता नाम्नी प्रिया तस्य, अरसिहादयः सुताः ॥ ६ ॥
द्वितीयोऽक्र सुमातुः सुगुरुवचनसुधास्वादनात्तृप्तचित्त,
श्रीमज्जैनेंद्रबिंबप्रवरजिनगृहप्रौढमपुस्तकार्दौ ।
सप्तक्षेत्र्या प्रभूत व्ययितनिजधनो लाहडो नामतोऽ-
भूल्लक्ष्मीश्रीरियभिख्या सुचरितसहिता तस्य भार्या सदार्या ॥७॥
अभयकुमाराभिख्यस्तृतीयोऽजनि नंदन ।
यो दध्रे मानस धर्मश्रद्धासत्कर्मकर्बुर ॥ ८ ॥
धर्मे सहाया सहदेवसाधो, सौभाग्यदेवीति बभूव जाया ।
पुत्रौ च पेथाभिधगोसलाख्यौ, प्रभावकौ श्रीजिनशासनस्य ॥ ९ ॥
किंच यो कृत्वा गुणसप्तकेऽस्मिन्नव श्रीसत्यपुरस्थितरा,
श्रीशत्रुंजयरैवतप्रभृतिषु प्रख्याततीर्थेषु च ।
न्यायोपार्जितसर्वमार्थनिवहं स्वीय व्ययित्वा मुदा,
क्षेमा ( ते शुचिराम सं )घपतिरित्याख्योत्सुका भूतले ॥ १० ॥
आद्यस्य अंशे किल सिन्धुदेवी नाम्ना कलत्र सुविवेकपात्र ।
तया सुता जेहड–हेमचंद्र–कुमारपाल–भिध– पासदेवा ॥११॥*

## ७०२४ श्री शांतिनाथजी ज्ञानभंडार, खंभात.

श्रीमहावीरचरित्रम् ( त्रिषष्टिय )  ता प्र २६

× × × × सोऽस्तु वीर, यदनुनिदितधामा गौतमस्वामिनामा ।
अपहरतु परेषामापद वैरिशाम्यामपहितजनितात्या विश्वविश्वप्रकाशा ॥ १ ॥

* ताडपत्र प्रशस्ति नं १४ अने २५ एकज जणानी छे पण नं २४ मां पहेला सात श्लोक त्रुटक होवाथी ते श्लोको पूरा करवा माटे ता प्र नं २५ ना पहेला अगीआर श्लोको ज लीधा छे तेथी अनुसंधान माटे जुओ ता प्र नं २४ पान १८ अने १९.

तस्यां शंवर भाम्वरं कुलगृहं लक्ष्म्याः क्षमालिंगितः....येन मुदि चयः ।
नित्यं श्रीपतिकेलिमंदिरमसौ मुक्तो न मर्यादया....विजयते **संडेरगच्छांवुधिः** ॥२॥

पूर्वं चालभगच्छमंडनमणिः संडेरगच्छ मो—
पत्तेर्हिंगिनिका न कस्तुतेवुधः शाली नवांभोधरः ।

× × × × ×

जज्ञे **शांतिमुनिश्वरः** किल शराश्वाद्यब्दे वृन्दे गते ।
यद्व्याख्या गलगर्जितैः सुरविभुर्विश्वंभरा वैभवात् ॥ ३ ॥
आचार्यवृन्देषु तदीयगच्छे, जातेष्वभूत् धर्मजनेषु........ ।
लीलावतीलोचनवाणकामं वीरं विनिर्जित्य वभूव शब्दः ॥ ४ ॥

समजनि मुनिरत्नं तस्य शिष्यावतंसः, सुरपतिललनाभिः सस्पृहं गीतकीर्तिः ।
सुकृतिभिरभिवंद्यः **श्रीयशोभद्रसूरि**र्नवजलधरधारासन्निभोक्तिरतंद्रः ॥ ५ ॥

येषामावालकालाद्विकृतिपरिहृति वर्जितं ताम्बूलं च....
धे मेघावृष्टिः सकललिपिवाचनेऽस्या निषेधः ।
**षंडेरे** पल्लिकाव्यानयनमथ नभोवर्त्म नेत्यादिकानि,
श्रुत्वा नानाद्भूतानि त्रिजगति कृतिनो—क्षेमर्षिसाजनि चांतराले,
मराल्लीला इति मागधानां ।
वंशोऽस्ति क्रीडाकरराजहंसः शुभ्रैर्यशभिर्धवलीकृतात्मा ॥ ७ ॥
येनोत्तुंगविशालकंवलगिरौ स्वात्तं तपो दुर्लभ ।
[1]............

मुमुक्षोः शिवपथि यततः साधुसार्थाधिपत्यं ॥ १६ ॥
तस्मादत्र जितेन्द्रियः शमनिधिर्विद्यावधूदर्पणः ॥
श्री**मानीश्वरसूरि**रित्यभिधया वाचंयमग्रामणीः ।
यो वालोऽपि धुरं वभार महतीं धौरेयवल्लीलया,
धीरः पंचमहाव्रतं प्रणयिनीं वैराग्यवीतस्पृहः ॥ १७ ॥
तत्रास्ति सुकृतिपद्रे सूरिमंडलमंडनः । **शालिसूरि**रियं नामा गुणरत्नैकरोहणः॥१८॥

इह **धर्कटवंशे**ऽभूद् **वरदेवो**ऽभिधानतः । निश्चितं वरदेवोऽयं, पुरुषः कुलभूषणं ॥ १ ॥
भार्या **पूर्णमति**स्तस्य, पूर्णा पूर्णमतिर्मना । तत्कुक्षिसंभवाः पंच, तनुजाः पांडवा इव ॥ २ ॥

आद्यो **लक्ष्मीधराख्यो**ऽभूत्, द्वितीयो **नामुताभिधः** ॥
तृतीयः **पासडः** ख्यातश्चतुर्थः **कालियाभिधः** ॥ ३ ॥

पंचमो **जगदेवाख्यः** सुकृतिकृतिवत्सलः । भार्या लक्ष्मीधरस्याभूत् , कमलश्रीरितिनामिका ॥४॥

---

[1] सातथी सोळ लगीना नव श्लोक मळता नथी.

तत्कुक्षिमानसे राजहंसो राजाक इत्यभूत् । राजाकस्य मता भार्याऽभयश्रीरिति सज्ञया ॥५॥
तस्या सुतद्वय जज्ञे, प्रथमोऽभयपालकः । द्वितीयो हरिचंद्राख्यधर्मधारकधीमान् ॥६॥
पासडस्य हि भार्याऽभूत्, जयश्रीरिति नामत । तया सुतद्वय जात, पुत्रिकाद्वितय तथा ॥७॥
यथार्थितस्वनामाऽभूत्, कुलधरो धुरि कृती । द्वितीयो देवसिंहाह्वो, देवादिगुरुभक्तिमान् ॥८॥
पुत्रिका मोहिणिख्याता, सदा धर्मपरायणा । द्वितीया सोहिणि ज्ञाता, गुरुस्वजनवत्सलः ॥ ९ ॥
कुलधरस्य भार्याऽऽसीत्, देवश्रीरिति नामतः । रूपलावण्यसयुक्तो नरसिंह सुतोऽभवत् ॥ १० ॥
नरसिंहस्य भार्यास्ति, नाम्ना लाच्छीति विश्रुता । कलत्रं देवसिंहस्य, देवमतिरिति श्रुता ॥११॥
तस्या सुतद्वय जात, पुत्रिकात्रितय तथा । आद्यो नयणसिंहाख्य, पर पृथिमसिंहक ॥१२॥
पुत्रिका भयणू नाम्नी, द्वितीया भीमिणिस्तथा । तृतीया आल्हणा जाता, स्वजन्यगुणवत्सला॥१३॥
कलत्र कालीयाकस्य धनश्रीरिव देहिनी । तस्या कुक्षिसमुद्भूतौ, पुत्रौ धीणा धरणिगौ॥ १४ ॥
मेहणीति तथा पुत्री हासिरा हेमुके परे । जगदेवस्य जायाऽस्ति, जगश्रीरिति सज्ञया ॥१५॥
तस्या कुक्षेस्तु सजातास्तनुजाश्च इहोत्तमा । आद्य खेमसिंहस्तु, पासुरवश्च वयजल ॥१६॥
पुत्रिकात्रितय जज्ञे, छाडि वेल्लु च लीलुका । भार्याऽस्ति क्षेमसिंहस्य, रूपिणीति सुविश्रुता ॥१७॥
जातं तत्पुत्रचतुष्क, लक्षण हरदेवकः । तृतीयोऽस्यपर्वतिर्नाम, चतुर्थो वेल्लुकाभिधः ॥ १८ ॥

× × × ×

खूदा भार्या च बाहुलु तत्पुत्र पद्मनामकः ॥ १९ ॥
इत्थं कुटुम्बेन समं विचिन्त्य, ससारसर्वस्वमनित्यमेव ।
स्वकीयमातु परिपुण्यहेतु, श्रीवीरवृत्त परिलेखयित्वा ॥
पुस्तकं वाचयामास, देवसिंहो महामति. ।
नन्दताद् यावच्चन्द्रार्क, सघेन सह सर्वथा शुभ भवतु ॥

## ७८७३. श्री आ. क. ज्ञानभंडार. लींबडी.

श्रीज्ञाताधर्मसूत्रवृत्तिः ता प्र २७

अनुत्तरो पपाकास्यार्त नवमागप्रदेश विवरण समाप्त ॥
सवत् ११८४ माघ सु ११ रवौ अद्येह श्रीमदणहिलपाटके महाराजाधिराजश्री-
जयसिंघदेवकल्याणविजयराज्ये ज्ञाताधर्मकथाअगवृत्तिर्लिखितेति ॥
शिवमस्तु सर्वजगत परहितनिरता भवन्तु भूतगणा ।
दोषा प्रयातु नाश सर्वत्र सुखीभवतु लोक ॥ १ ॥

ज्ञाताधर्मकथागचतुष्टयवृत्ति ॥

श्रे० देशल पुत्र यशहड सूलण रामदेवस्य, ॥ पुस्तकमिदं ॥*

प्राज्यच्छायो जन्मभूमिर्गुणानां दिक्पर्यन्तव्यापिशाखाकलापः ।
पत्रोपेतः पर्व्वभिर्व्वर्द्धमानः प्राग्वाटानामस्ति विस्तारिवंशः ॥ १ ॥

तत्र प्रबद्धे हृदयालयेषु, कृतस्थितिः पुण्यवतो जनस्य ।
वृत्तोज्ज्वलः कांतिकलापपात्रं........श्रावक सर्व्वदेवः ॥ २ ॥

अवदाता प्रभेवास्य तमः प्रसरवारिणी । महिमेति सुविख्याता, बभूव सहचारिणी ॥ ३ ॥
ताभ्यां पुरस्कृतनयस्तनयोऽजनिष्ट, निष्टापरः परमसंयमिनां वरिष्ठः ।
राजन्यमान्यमहिमा हिमपूरगौरैः । ख्यातो गुणैर्जगति झंझुलनामधेयः ॥ ४ ॥

जाताऽस्य प्रेयसी मान्या, सीमाऽन्या रूपसंपदः, पूर्णदेवीति सौभाग्यमसौभाग्यं च बिभ्रती ॥५॥
जातमपत्यचतुष्टयमाभ्यामभ्यस्तशस्तजिनधर्म्मं । भुवनगुरुबिंबपूजनकृतादरं मंदिरं नीतेः ॥ ६ ॥
प्रथमो देहडनामा, देशलनामा सुतोऽपरस्तत्र । मोहिणि–पुन्निणिसंज्ञे पुत्र्यौ पात्रं विनयलक्ष्म्याः॥७॥
एषां मध्ये सहृदयहृदयो धार्मिकः श्रावकाणां मुख्यः श्रीमान्मथितकुमतो वर्त्तते देशलाख्यः ।
यस्याजस्रं श्रवणपुटकैः सयशःक्षीरपूरं पायं पायं कथमपि जना नैव तृप्तिं भजंति ॥ ८ ॥

किंच—

गांभीर्येण पयोनिधिर्धिषणया वृंदारकाणां गुरोस्तुंगत्वेन सुपर्व्वपर्व्वतपतेः सौम्येन शीतत्विषः ।
सौंदर्येण मनोभवस्य विभवित्वेतोत्तराशापतेर्योऽलंतं प्रतिपंथ्यपि त्रिजगतीमित्रं परं कीर्त्यते ॥ ९ ॥

अन्यच्च—

न्यायार्जितेन विभवेन भवांतहेतोः, स्वीयालयोचितमनूननयेन येन ।
त्रिलोक्यकैरवविकासशशांकबिंबं विधापितंपश्चिमतीर्थभर्त्तुः ॥ १० ॥
शीलालंकारवती स्थिरदेवी वल्लभाऽभवचास्य ।
रेमे यदीयमनसा मनागपि न तीर्थिकवचस्सु ॥ ११ ॥
अनयोः संजातास्ते तनूरुहा वाहडादयः सदयाः ।
मारोहतिमारोहति विलोक्य कायश्रियं येषां ॥ १२ ॥

अन्यदा देशलः श्रुत्वा, तद्वाविधगुरोर्गिरः । प्रवृत्तश्चेतसा सार्द्धं, समालोचयितुं चिरं ॥ १३ ॥
तथाहि—

अहो भ्रात श्रुतो गुणगणनिधे ! किं नु भणसि, क्षणं वार्तामेकां शृणु ननु मदीयामवहितं ।
भवांभोधेर्मध्ये महति पततां हंत भविनां, विना जैनं धर्म्मं किमपि शरणं नास्ति नियतं ॥ १४ ॥

* श्रीवर्द्धमानसूरीयश्रीचक्रेश्वरसूरीणां श्रीपरमाणंदसूरीणां

दानादिभेदैः ॥ पुनस्त्रिभेदं, प्रकल्पितो यद्यपि पूज्यपादैः ।
लातव्यहातव्यविवेकहेतुस्तथापि विज्ञानममीषु मुख्यं ॥ १५ ॥

मतिज्ञानादिभिर्भेदैः, तच्च प्राणाचि पंचधा । स्वान्यावभासकत्वेन, श्रुतज्ञानपरंपरं ॥ १६ ॥

हे चित्त ! किंचित् तदमुत्र भक्तिं, विधातुमिच्छामि धनव्ययेन ।
मनस्ततः प्राह विधेहि शीघ्रं, धर्मे न यस्मादुचितो विलंबः ॥ १७ ॥

इदं हि विमुद्दरिणीकटाक्षसहोदरं द्रव्यमुदाहरंति ।
अनेन चेन्निखलपुण्यराशिर्विढप्यते चारु तदिग्म्यमेतत् ॥ १८ ॥

इत्थं निजेन मनसा मुनिनायकैश्च, चंद्रेश्वरैरयमिधया प्रथितैः पृथिव्यां ।
प्रोत्साहितः सपदि देल्हलनामधेयो, मंथानश्लोलिखदमूंश्चतुरः सटीकान् ॥ १९ ॥

धरति धरणीं शेषो यावत् निजे फणमंडपे, कनकशिखरी देवैर्यावत्सनंदसु सेव्यते
गगनपथिकः सूर्यो यावत् प्रकाशयते दिशो, भ्रमभ्रमसौ तावत् पुंभामपास्यति पुस्तकः ॥ २० ॥
प्रशस्तिः समाप्ता ॥ मगलं महाश्रीः ॥ ज्ञाताधर्मकथांगचतुष्टयमूत्रवृत्तिपुस्तकं श्रीयशोदेवसूरीणां श्रीमभसूरीणां श्रे. देल्हण पुत्र पद्महड मूलण रामदेव आल्हण श्रावकाणां ॥मंगलं महाश्री।

## ७०२२ श्री. शां. ज्ञा. भं. खंभात.

श्रीभुवनसुंदरीकथा. ता. प्र. २८

श्रीमद्गूर्जरवंशप्रभवः संभवदनेकगुणविभवः ।
साधुहरिचंद्रसूनु पुण्यश्रीकुक्षिसंभूतः ॥ १ ॥
दुःस्थार्थिसंतापहरः प्रसिद्धः स्वच्छाशयश्चारगुणाचितश्च ।
मुक्तोपमानो वसुमान् सुवृत्तः, समस्ति साधुर्नयपालनामा ॥ २ ॥
तस्यास्ति जाया रयणाभिधाना, दानादिसद्धर्मरता प्रधाना ।
पुत्रास्त्वमी प्रौढविवेकचर्या, ख्यातास्त्रयो निर्मितसंघकार्याः ॥ ३ ॥
आद्यो वदान्य कृतिलोकमान्यः, प्राज्ञ सुधन्योऽजनि कोर्तिसिंहः ।
दानोद्यतोऽन्यस्त्विह देवसिंह, साल्हाभिधः साधुवरस्तृतीयः ॥ ४ ॥
साधुनयपालपत्नी रयणादेवी विवेकधर्मज्ञा । पुस्तकमेनं श्रीभुवनसुंदरीसत्कथासत्कं ॥ ५ ॥
आत्मश्रेयोऽर्थमथ व्याख्यापयितुं जनोपकाराय ।
जगृहे मूल्येन मुदा सागररसविश्वेंदु (१३६५) मित वर्षे ॥ ६ ॥
पुष्पदंताविमौ यावद् वर्तेते गगनांगणे । बुधैर्व्याख्यायमानोऽयं तावन्नंदतु पुस्तकः ॥ ७ ॥
भुवनसुन्दरीकथा पुस्तकं । सा. नयपाल भार्या रयणादेव्याः सत्कं ॥

## ७०२५ श्री शांतिनाथजी ज्ञान भंडार. खंभात.

खीवडेन लिखिता पुस्तकं ।

श्री. व्यवहारचूर्णिः ता. प्र. २९

ओकेशवंशप्रभवः प्रसिद्धः चाचाकपुत्रो नरसिंहसाधुः ।
मोरीस्तनुजास्तनयास्तदीयाः, सतैव कल्पतोऽज्वलधर्मकृत्याः ॥१॥
तत्राद्यः सांगण १ इति द्रीताक २ स्त्रिभुवनश्च ३ लीखाकः ४ ।
रावण ५ देदाका ६ वथ धानाक ७ इति क्रमेणामी ॥ २ ॥
व्यवहारचूर्णिमलीलिखन् निजसुतस्य सोमस्य । देवश्रीतनुजस्य श्रेयोऽर्थं साधु देदाकः ॥३॥
जयति जिनशासनमिदं निर्वृतिपुरमार्गशासनंयावत् ।
मुनिभिरिह वाच्यमानस्तावदसौ पुस्तको नन्यात् ॥ ४ ॥

## ८०९३ श्रीशांतिनाथजी ज्ञानभंडार. खंभात.

श्रीउपदेशमालाविवरणम्. ता. प्र. ३०

सिद्धर्षिकृतं, ठक्कुर जेत्रसिंहस्य..... ..पूज्यसिंहेन निपुणेनार्पिता संवत् १२९१ वर्षे अषाढ सुदि १३ शनौ उपदेशमालायाः पुस्तकं लिखितमिति ॥

## श्री शांतिनाथजी ज्ञान भंडार. खंभात.

श्री अनुयोगद्वार वृत्तिः ता. प्र. ३१

संवत् १३०१ वर्षे आषाढसुदि १२ शुक्रे अद्येह श्रीधवलक्कनगरे वास्तव्य प्राग्वाटवंशोद्भवेन व्य० वासदेवसुत गांधिक श्रे० धाणाकेन वृहत् लाभासिद्धा श्रेयोऽर्थं ससूत्रा मलधारी श्री हेमचंद्रसूरि विरचिता अनुयोगद्वारवृत्तिर्लेखयांचक्रे ॥

## श्री शांतिनाथजी ज्ञान भंडार. खंभात.

श्री नंदीसूत्र वृत्तिः ता. प्र. ३२

संवत १२९२वर्षे वैशाख सुदि त्रयोदशे अद्येह वीजापुरे श्रावकपौषधशालायां श्री देवभद्रगणि पं. मलयकीर्ति पं. अजितप्रभगणिप्रभृतीनां व्याख्यानतः संसारासारतां विचिन्त्य सर्वज्ञकृतं शास्त्रं प्रमाणमिति मनसि ज्ञात्वा सा० धनपाल सुत सा० रत्नपाल ठ० गजसुत ठ० विजयपाल श्रे० देल्हासुत श्रे० विल्हण महं० जिणदेव महं० वीकलसुत ठ० आसपाल श्रे० सोलट्टा ठ० सहजासुत ठ० अरसीह सा० राहडसुत सा० भाहड प्रभृति—समस्तश्रावकैः समस्तचतुर्विध-संघस्य पठनार्थं वाचनार्थं च समर्पणाय लिखापितं ॥

## श्री शांतिनाथजी ज्ञान भंडार, खंभात.

श्री षट् कर्मग्रंथः ता. प्र. ३३

ओकेशवंशभूपणपद्मसुत सा० वीजड भार्या विश्रमदे तत्सुता श्री सारज नाम्नी सा० आम सिंहसुत सा० धर्मसिंह भार्या सदा नानाविधपुण्यकृत्यपरायणा श्रीमत्तपागच्छमंडन सुविहित चक्रचूडामणि भ० श्री देवसुंदरसूरीणामुपदेशेन स्वश्रेयसे नव्यकर्मग्रंथवृत्तिपुस्तकं श्री विक्रम नृप संवत् १४४७ वर्षे लेखयामास, आचन्द्रार्क पुस्तकोऽयं बुधैर्वाच्यमानो नंदतात् ॥

## श्री शांतिनाथजी ज्ञान भंडार, खंभात.

श्री उपदेशमाला वृत्ति ता. प्र. ३४

श्रीमन्नर्बुदतुंगशैलशिखरच्छायाप्रतिष्ठापदे, धर्माणाभिधसन्निवेशविषये (न्य)ग्रोधवृक्षो बभौ ।
यच्छाखा शतसंख्य(मध्य) बहलच्छायास्यपायाहत, सौख्येनोषितसंघमुख्यशकटश्रेणीशतांपेचकः ॥१॥
ज्ञाने क्वापि समस्तकार्यजनके सम्यग्महालोकने ।
ज्ञात्वा ज्ञानवशाद् गुरु पृथु हित श्रीसर्वदेवाभिध ।
आचार्यान् रचयांचकार चतुरस्तस्मात् प्रवृद्धो बभौ ।
गच्छोऽयं वरगच्छनामरुचिरो जीयात् युगाना शत ॥ २ ॥
तत्र श्रेकादशा (त वाल्मीकन) सूरिराजविपुले (ले) गच्छे प्रतिष्ठाधिकं,
पूज्य श्रीजिनचंद्रसूरिरभवत् श्रीमधरद्योतकः ।
शुद्धात्मा धवलक्कके पुरवर या(पा)शांकचैत्यांतरे,
श्रीसंघप्रमदप्रभाविपुले तन द्योतिनी(स्तेवांसिद्वन्द्वैर्वृत) ॥ ३ ॥
तस्मिन् पट्टमहोदयौ नयविदु श्री आम्रदेवाभिधा यद्व्याख्यानमदोपशाखरचन वचनमतिर्योतिमान्, यद् व्याख्यान रसायनामृतमहालोभादिहादेवता कौष्माडि स(समु)पागमत् प्रमुदिता जीयात् स सूरि प्रभु ॥४॥ तस्य आदि सूरिरभवत् श्रीनेमिचंद्राभिधो, धर्मो (धार) त्रिजगती सुचरितप्रख्यातकीर्तिर्मत । तातीयो मुनिपुङ्गवस्समभानि श्रीमान् यशोदेवगुरुः सूरि सच्चरित प्रसिद्धमहिमा सत्युद्धधार्या शशिपियूषो मुरमुख्य ज्ञाता हसत साद्रे मम स्थानके सम्यग् क्षमा ग साहित्य गच्छेच्छपि ।

## श्री शांतिनाथजी ज्ञान भंडार, खंभात.

श्री आख्यानमणिकोश सवृत्ति ता प्र ३५

इति श्रीमदाम्रदेवसूरिविरचित वृत्ताख्यानकमणिकोशवृत्ति समाप्तमिति ॥ मंगल महाश्री ॥ शिवमस्तु सर्वजगत ,परहितनिरता भवन्तु भूतगणा । दोषा प्रयान्तु नाश सर्वत्र सुखी भवतु लोक ॥

प्राग्वाटवंशतिलकोऽजनि पूर्णदेवस्तस्यात्मजास्त्रय इह प्रथिता बभूवुः ।
दुर्वारमारकरिकुंभविभेदसिंहस्तत्रादिमः सलपणोऽभिधया बभूव ॥ १ ॥

द्वितीयकोऽभूद् वरदेवनामा तृतीयकोऽभूज्जिनदेवसंज्ञः ।
सोऽन्येद्युरादत्त जिनेंद्रदीक्षां निर्वाणसौख्याय मनीपिमुख्यः ॥ २ ॥

अज्ञानध्वांत सूर्यः सरभसविलसत्वंग संवेगरंग ।
क्षोणी क्रोधादियोधप्रतिहतिंसुभटो ज्ञातनिःशेपशास्त्रः ।

निर्वेदांभोधिमग्नो भविककुवलयो धोधना (?) धानचंद्रः
कालेनाचार्यवर्ये समजनि जगच्चंद्र इत्याख्यया हि ॥ ३ ॥

वरदेवस्य संजज्ञे वाल्हाविरिति गेहिनी। याऽभूत् सदा जिनेंद्रांह्रिकमलासेवनेऽलिनी।४।

पुत्रास्तस्या साढलनामधेय ( रेसिंह ) इत्याह्वयः वज्रसिंहाः ।
विवेकपात्री सहजू च पुत्री कुशीलसंसर्गतरोर्लवित्री ॥ ५ ॥

साढलस्य प्रिया जज्ञे राणूरिति महासती ।
पुत्रास्तु पंच तत्राद्यो धीणाख्यः शुद्धधर्मधीः ॥ ६ ॥

द्वितीयः क्षेमसिंहाख्यो भीमसिंहस्तृतीयकः ।
देवसिंहाभिधस्तुर्ये लघुर्महणसिंहकः ॥ ७ ॥

क्षेमसिंहाभिधो देवसिंहश्च भवभीरुकः । श्रीजगच्चंद्रसूरीणां पार्श्वे व्रतमशिश्रियत् ॥ ८ ॥
धीणाकस्य कडूर्नाम पत्नी मोढाभिधः सुतः । अन्येद्युः सुगुरोर्वाक्यं धीणाकः श्रुतवानिति ॥९॥

भोगास्तुंगतरंगभंगभिदुराः संध्याभ्ररागभ्रमौ
पम्या श्री नलिनीनलस्थितपयोलोलं खलु प्राणितं ।
तारुण्यंतरुणी कटाक्षतरलं प्रेमातडित्स्थं निलो
ज्ञात्वैवंक्षणिकं समं विदधतां धर्मं जनाः ! सुस्थिरम् ॥ १० ॥

सद्ज्ञानयुक्तो नियम वृपोधि भावन्महानंदपदप्रदायी ।
तत्रापि च स्वान्यविवोधकारी त्यागः श्रुतज्ञानमिहोत्तमं हि ॥ ११ ॥

तच्चकालमतिमांद्यदोपतः पुस्तकेपु सुवनैकशालैः ।
पूर्वसूरिभिरथो निवेशितं तद्वरं भवति तस्य लेखनं ॥ १२ ॥

एवं निशम्य तेन न्यायोपार्जितधनेन व्ययेन।
आख्यानकमणिकोशस्य पुस्तकाय व्यधायि मुदा ॥ १३ ॥

यावत् .... .... .... .... .... .... .... वाच्यमाना वुधैः ॥ १४ ॥

## श्री शांतिनाथजी ज्ञान भंडार. खंभात.

श्रीकालिकाचार्यकथा – ता प्र ३६

॥९०॥ श्रीमालवंशोऽस्तिविशालकीर्ति शातिसूरिः प्रतिबोधित डींडकाख्य ।
श्रीविक्रमान्देद नममाहर्षिम सरै श्रीआदिचैयकारापित नवहर च (?) ॥ १ ॥

तस्य शाखा समुदभूत् देवसिंहो गुणाधिक ।
तत्सुत धर्मसिंहस्य अभूत् पुत्रो मलसिंहकः ॥ २ ॥

महीरोल्नगोत्रे च मडनो पाधकामिधा
तत्सुतात्रय सजात कुद उग्दार नामत ॥ ३ ॥

हालाक भगिनी यस्य चतुष्टयी ।
शीलालकारधारी च आभूमनी च मडणला ॥ ४ ॥

षट्दर्शनभक्ता उलश्रीरिवाहरि मडन । अर्धागलक्ष्मी साहु मलसिंहस्य पुण्यभुक् ॥ ५ ॥

पचपुत्रा पवित्रा च पंचपुत्री सतीव्रता । क पद्मसमानेऽपि सघशासनसेवकान् ॥ ६ ॥

धारा रामा कम्पाको जइतसिंहक भीमको । उदी पूनी च चादु च रुक्मिणी सोनणी तथा ॥७॥
धाराक पत्नी च सुव्रता जयश्री तदागता वेदमि वा चतुष्टय ।

सधर्मिणो पापण मदनको च, रत्नस्य रत्नाकरतु यस्य धनसिंह वीरस्वजनप्रियश्च ॥ ८ ॥

रामा पुत्र सुखेताक पद्मो श्पाक नरना । जइतसिंह सुता हालू भीमापुत्रीसलक्ष्मणी ॥ ९ ॥

स्वश्रेयस कारितकल्प पुस्तिका पुण्योदय रत्नभूमि श्रीपग्गिच्छे स्वगुणौकधाम्ना ॥
वाचिता श्रीमद् चक्रेश्वरसूरिभिः ॥ १० ॥ छ ॥ छ ॥

इय विक्रम कालातीत स १३६५ वर्ष भाद्रपद वदी नवम्यांतिथौ श्री मेदपाटमंडले वऊणा ग्रामे कल्प पुस्तिका लिखिता ॥ मगल महाश्री ॥ शुभ भवतु ॥

सवत् १३७८ वर्ष भाद्रपद सुदि ४ श्रावक मोल्हासुतेन भार्या उदयसिरि समन्वितेन पुत्र सामा लापा पेता सहितेन श्रावक उदाकेन श्रीकल्पपुस्तिका गृहीत्वा श्री अभयदेवसूरिणा समर्पिता वाचिताय

## श्री. शां. ज्ञा. भं. खंभात.

श्रीत्रिषष्टि (पर्व २–३) ता प्र ३७

सवत् १२९५ वर्षे अश्विन वदि २ रवौ अद्येह श्रीबीजापुरपत्तने समस्त राजावली पूर्वक तपागच्छीयश्रीपोषधशालाया चरित्रगुणनिधानसमस्तसिद्धात कल्पमानेन पारगेततपा देवभद्र

गणिमलयकीर्ति पं० फुलचंद्र पं० देवकुमारमुनि नेमिकुमारमुनिप्रभृतिसमस्तसाधूनां तच्चरण-कमलानांभक्त परमश्रावक साधु रतनपाल समस्त सिद्धांत पुस्तकानां पौषधशालाभारनिर्वाहक परमश्रावक श्रेष्ठि वील्हण द्वितीयभारनिर्वाहक सधर्म्मिकानां वात्सल्यतत्परे परमश्रावक ठ० आसपाल तृतीयभारनिर्वाहक निरंतरं पुस्तकसिद्धांतनिर्विकल्पभक्त्यासारतत्पर परम श्रावक साधु० लाहड प्रभृतीन् समस्त श्रावकैः त्रिपष्टि पुस्तकं समस्त साधूनां श्रावकाणां पठनवाचन-पुन्य श्रेयोर्थं लिखापितं ॥ छ ॥ लेखक पाठकानां शुभं भवतु ॥ मंगलं महाश्रीः ॥ शिवमस्तु॥छ॥

## श्री शांतिनाथजी ज्ञानभंडार. खंभात.

**श्री शांतिनाथ चरित्रम्.** ता. प्र. ३८

संवत् १३३० वर्षे आषाढ शुदि १५ शनौ ॥ ॐ० ॥ नमः सर्वज्ञाय ॥

स श्रीशांतिः श्रियेवो(यो)ऽस्तु॥याऽपूर्व्वो मृगलांछनः॥अविनाशि रुचिच्छायः । सदाद्योतः प्रकाशकः ॥

सश्रीकं जिन माहवनू ( वियन् ) लवणिमालीला गृहं रत्न (सूः) ।
स्तरो रुः (चन्द्रः) पूर्णकलामवाप्य मुदितस्तन्वन्नदीनां स्थितिं ॥

शश्व(श्व)द्गोत्र पतिष्ठा रुचिरसनिलयः साधुवृत्तः समज्जः (स) ।
सत्वाधारः समुद्रोपम इह जयति प्राग्वटनामान्वयः ( टीयान्वयोऽयम् )॥ १ ॥

तदन्वये भूद्‌धनदानुकारी सन्मार्गशाखीव परोपकारी ।
धनेश्वरो धर्म्म धुरीणदेहस्तस्यांगजोऽभूद्‌धनदाक नामा ॥ ३ ॥

काशहृदे वरनगरे धनदाकेनादिनाथजिनभुवने । मूलप्रतिमाभिनवास्थाप्यत शुद्धेन चि(वि)त्तेन ॥४॥

श्रेष्ठिनो धनदाकस्य ब्रह्मदेवः सुतः शुभः । वाग्भटश्च सुता चैकालक्ष्मणिः शीलशालिनी ॥ ५ ॥

पुत्रो गोगाक नामाभूद् वाहडस्य गुणश्रियः । गोगाक सूमला पत्नी तयोः पुत्रत्रयं क्रमात् ॥ ६ ॥

ऊधिगधांधूआकडमुख्या साल्हु तथा परा दुहिता । सौभाग्यश्रीदेवीदाख्यां पत्न्यौ शुभाकारे ॥७॥

भार्याऽभूद् वह्मदेवस्य मंदोदरी शुभाशया । तयोः पुत्राश्चतुः संख्या धर्म्मकर्म्मणि कर्म्मठाः ॥८॥

आल्हाकः सकलः कलंकरहितः स्वस्थासच्छाशयो धर्म्मधीः ।
साल्हाको महिमानिधान मतुलो वाक्येन सन्नंदकः ॥

राल्हाको गुरुपादपद्मभसलः सर्वज्ञपूजारतः ।
साल्हाकः सबलः सलीलगमनः सत्यव्रतालंकृतः ॥ ९ ॥

राल्हाक कुमारदेव्योः पुँत्रत्रितयं तु ब्रह्मणागाद्य ः ।
काल्हूक रत्नसिंहौ मह्मी सोहग सुते द्वे च ॥ १० ॥

आल्हाकोर्जितवित्तादाभरणं श्रीयुगादिदेवस्य । आरत्रिकं च मंगल्दीपयुतं कारयामास ॥ ११ ॥

आल्हाकरत्नदेव्यो रत्नत्रयधारकास्रयः पुत्राः ।
गुणधरयशधरमुख्या श्राहणिसमधर सुताचैका ॥ १२ ॥

समधर भार्या कर्म्मणि पुत्रा. सप्त क्रमेण कोल्लाशुः ।
आसा सपाल सैढा पूना हरिचंद्र वयराख्याः ॥ १३ ॥

गुणधरभार्या स्वच्छा शीलतपोदानभावधर्म्मरता ।
राजमति रंग जातास्तेयोर्जैना नंदकाः शस्याः ॥ १४ ॥

पार्श्वमटो वीराकः अंबा लीबाक सोमदेवाश्च ।
शील्ह् हीर लडुहिते जिनधर्म्म सद्योयते ह्यर्तपते ॥ १५ ॥

पासडभार्या साजिणि पुत्रौ द्वौ विजयसिंह नयणाकौ ।
धीरा पत्नी राजश्री सूनुत्रितये तु जगपालः . ॥ १६ ॥

हरपाल देवपालौ आंबाभार्या च लल्तुंप्का श्रेष्ठी ।
नरपालः सुतश्चैको लीवा कल्याण पमाख्या ॥ १७ ॥

विजयश्रीयशधरयोर्नरसिंहस्तद्(सूनु)रतिथिजनभक्तः ।
पाती दुहिता चैकाकुटुम्बमेतच्च सुविशालं • ॥ १८ ॥

॥ १९ ॥

श्रीभुवनरत्नपूज्याः पारींद्रा वादिकुंजरेण । कांतारानिवृत्तिका गच्छधराः शुभाचाराः ॥ २० ॥

आनंदप्रभसूरींद्रा स्तत्पदांभोजमानव. । सिद्धांतजलधिपारं प्रापुः प्रज्ञाप्रकर्षेण ॥ २१ ॥

तत्पट्टे विशुद्धे श्रीमंतो वीरदेवसूरींद्राः । तत्पट्टे सच्चरिता धीमंतः कनकदेवाख्याः

सद्गुतो गुणधरः श्राद्धः पार्श्वे श्रीकनकदेवसूरीणां ।
धर्म्मोपदेशमतुलं शुश्रावैःयमघापहं (त्थं त्व.घापहं जातु) ॥ २२ ॥

गुणानां सर्व्वेषां जगति सयनी संपदांनरं
ययादापोः सर्वे जगति गुणतां यांति गृहिणां ।
नरेन्द्राख्यादस्या जलधिजलकल्लोल चपला परेषांसा
केषां सननिकरं धर्म्मे कार्यं (स्थास्यति चिरं ) ॥ २३ ॥

जिनबिंब भुवन पुस्तकतुर्य विधिसंघ सप्तक्षेत्रेषु ॥
यो वपति वित्तबीजं लभते हि परत्र स बहुफलं ॥ २४ ॥

मुनि क्षेत्रांतर्विशेष पुण्याय विशेष पुण्याय पुस्तक क्षेत्रं,
पुस्तक(म) पिल्वयत्प्रभावाद्भवंति धर्म्मोपदेष्टार ॥ २५ ॥

कलिकालकालविलसिततमसापिहितेन धर्म्मवररत्नं
अत्र लिपित पुस्तकमये दीपे तत्प्रकटनं भविनां ॥ २६ ॥

केवलज्ञानपरिस्पर्धि श्रुतज्ञानमुदीरतं ॥
अतस्तल्लेपने पुण्यमगण्यं गदितं जिनैः ॥ २७ ॥

इत्थं श्रुत्वा पुत्रसहायातोऽसौ श्रेष्ठी न्यायोपात्तवित्तेन हृष्टं शांते वृत्तं लेखायामास शुद्धं पित्रोः ॥

## श्री शांतिनाथजी ज्ञानभंडार. खंभात.

**श्री उत्तराध्ययन सूत्र लघुवृत्तिः** ता. प्र. ३९

॥ छ ॥ पं० ॥ स श्रीवीरजिनो जीयाद्यस्य पादनखांशवः ।
विकाशे भव्यराजीवराजेस्तरुणभानवः ॥ १ ॥
श्रुत्वा वटावातिमुख्यमुच्चै हिंसा फलंतत्र दयाप्रधानाः ।
धर्म्म्येषु कृत्येषु जना यतंते पुरं तदत्रास्ति दयावटाख्यं ॥ २ ॥
तत्राभवत् **कुमारसिंह** इति प्रसिद्धः श्रेष्टी जिनेशपदपंकजबद्धरागः ॥
सम्यक् त्रिवर्गनिरतोऽपि शुद्धः धर्म्मे कामाः । **प्राग्वाट** वंशे तिलकः सदनं गुणानां ॥ ३ ॥
नाम्ना **कुमरदेवी**ति तस्य जज्ञे सधर्म्मिणी, शीलादिभि र्गुणैः शुद्धैः सुलसामनुकारिणी ॥ ४ ॥
तयोस्तनूजा क्रमशो बभूवुः पंचात्रपंचाचरणेन वित्ताः
तत्रापि धुर्यो नय मार्गनिष्ठो **देदाक** नामा सुगुणैर्गरिष्टः ॥ ५ ॥
द्वितीयः किलस्मांसभाकस्तृतीयः **सांगणा**भिधः ॥ **धनपाल**श्चतुर्थस्तु पंचमो**ऽभया**ऽभिधः ॥ ६. ॥
आद्यस्य शीलपात्रं, **विशलदेवी** बभूव सुकलत्रं, देवगुरु.................द्वितीयस्य ॥ ७ ॥
**श्रृंगारदे**व्यभिधया शुचिशीला **सांगण**स्य जायाभूत् ।
**धनपाल**स्य तु दयिता **सलषणदेवी**ति सुयथार्थाः ॥ ८ ॥
**आल्हणदेवी** संज्ञा जज्ञे जाया पुनः कनिष्ठस्य च ।
**देदाक**स्य तनुसुवो**ऽजयसिंह**प्रमृतयोऽभूवन् ॥ ९ ॥
धर्म्मकर्म्मरते नित्यं गुरुलज्जाविभूषणे ।
**देदादीनां** स्वसारौ......................... ॥ १० ॥
क्षीप्रपद्यजनकेसुरालयप्राप्तो**देदाकः** सकुटम्वः श्रुश्रावैवं सुगुरुवाक्यं ॥ ११ ॥
मनुष्यत्वादि दुष्प्रापां लब्धेऽमी द्वादशांगिको ॥
धर्म्म एव विधातव्य इहामुत्र सुखार्थिना ॥ १२ ॥
यद्यपि स चतूरूपः प्ररूपितस्तीर्थनायकैर्भविनां ॥
गृहिणस्तथापि सुकरो विशषतो दानधर्म्मोऽत्र ॥ १३ ॥

सोऽपीह ज्ञानाभयधर्म्मोपष्टभदानतस्त्रिविध ।
तत्राद्यमेव दान विशेषत परमपदहेतु || १४ ||

सूत्रार्थदानसाहाय्यकरणपुस्तक लिखापनाद्यैस्तै ।
बहुधा तथापि पुस्तक सफली क्रियते सदा ||

आशाधर स्तदाद्य संघपति सप्ततीर्थसुप्रथित
निर्मलकीर्तिर्द्देसलसज्ञस्तस्यानुज मा च || १५ ||

लावण्य (पात्र) किल लूणसिंहस्तयोर्लघु पापगजैकसिंह ||
न्यायार्जितैर्यस्य धनै सदैव साधुत्वभाव हि मत विनैव || १६ ||

रत्नश्री सद्भार्या तेषामाद्यस्य श्रीरिया (भवत्)
भोली लाछी लावण्यसिंहस्य || १७ ||

रत्नश्रीकुक्षिजा पुत्राश्चतस्रश्चतुराशया
माणिक प्रथमा तासा शोभितोभयपक्षका || १८ ||

तत सोहमसज्ञा च, गुणभूषिता ||
तृतीय तुर्ये दुहिते कस्मरी माउकाभिधे || १९ ||

सहजपाल इति प्रथम सुत सहजसद्गुणत सुमनोरत ||
भुवन पेसलदेसल स कुलदु कृतदानव || २० ||

द्वितीय साहणाभिख्य ख्यात स्वगुणसपदा ।
जिनाह्रिकमले भृगस्तृतीय समराभिध || २१ ||

जजुतासुसखीयस्य साजण कूलनूरुहा ।
रभाभिधा तदग्या च देसलस्य शुभा मन || २२ ||

सहजलदेवी जाया मायामुक्तस्य सहजपालस्य ।
राजमचि स काता साहण साधो स्तुसहु
धण्ये सिंहस्य सामत समतायुत ।
तल्लधु सागणश्चापि कुलधूर्धवल किल || २३ ||

पुण्यपानीयसपर्कात् वृद्धिं याति कुलद्रुमे ||
आशाधरो विशुद्धात्मा चिंतयामास चेतसि || २४ ||

श्रुताधीन कलौ धर्म्मं नचैत पुस्तक विना । पुस्तकानि तु लिख्यते लेखकै र्लब्धवेतनै || २५ ||

विर्चिंयति स्वचित्तेन पित्रो पुण्याय मानत ।
उत्तराध्ययनस्येह सम्पूर्णवृत्तिपुस्तक || २६ ||

सिद्धरिसूरिगुरोराज्ञां, बिभ्राणः शिरसा भृशं ।
करेष्व्यौंदु १३५२ वर्षेऽत्र, व्यलीलिपदवाचयत् ॥ २८ ॥

एवं संघाधिपोऽसौ विशदगुणमयः साधुआशाधराह्वः
पित्रोः पुण्याय हर्षादतिरुचिरमिदं पुस्तकं वर्ण्यवर्णं ।
............व्रतानां कलितमसिसतामुत्तराध्यायवृत्तेः
विद्वल्लोकस्य चित्तप्रशमसुखकरं कारयामास विज्ञः ॥ २९ ॥

आशाधर ! तवापूर्वा कीर्तिर्वल्ली समुद्गता
आलवालेव दुष्काले निर्जले दीनदानतः ॥ ३० ॥

श्रीदेवगुप्तसूरीणां, शिष्यः समुदि संसदि ।
पासमूर्तिस्तदादेशात्, किमप्यर्थमभाषत ॥ ३१ ॥

....................जरेये(स्ये)ह, पुष्पदंतौ स्थिराविमौ ।
गुरुभिर्वाच्यमानोऽयं, तावन्नंदतु पुस्तकः ॥ ३२ ॥ छ छ ॥

संवत् १३५२ वर्षे वर्षाकाले श्री उपकेशगच्छे श्री ककुदाचार्यसंताने श्री सिद्धसूरिप्रतिपत्तौ सा० वेसठ संताने सा० गोसात्मज संघपति आशाधरेण श्री उत्तराध्ययनवृत्तिः ससूत्रा कारिता ।

## श्री शांतिनाथजी ज्ञान भंडार. खंभात.

**श्रीयोगशास्त्रसटीकम्** ता. प्र. ४०

भृंगीणामिव पक्षपातललितैर्लीलागृहं सुश्रियां, सुच्छायो विततोऽतिविस्मयकरः श्रीमालवंशोऽस्त्यसौ ।
उद्यत्पर्व्वमनोहरः क्षितिधरे प्राप्तप्रतिष्टोदयः, पत्रच्छत्रपरंपरा ननु परादस्यन्त एवानिशं ॥ १ ॥

आसीद्वंशे वरगुणगणे तत्र मुक्तानुकारी, कांत्युल्लासैर्निरुपमतमः (मल्लः) साधुवृत्तानुसारी ।
शुद्धध्यानोपचितसुकृतो देवपूजादिनिष्ठः, श्रेष्ठी श्रेष्ठः सुनयविनयैः सामदेवो गरिष्ठः ॥ २ ॥

पासिलाख्यः सुतस्तस्मादत्यद्भुतसुवैभवात् ।
सुमनोवर्गमुख्योऽभूज्जयंत इव वासवात् ॥ ३ ॥

अगण्यपुण्यलावण्या, यस्य पूना विनामिका ।
सीतेव रामचंद्रस्य, जाता पत्नी पतिव्रता ॥ ४ ॥

तौ सर्व्वदेवसामाख्यौ, तत्कुक्षिव्योममंडनं ।
जज्ञाते ज्ञातमहात्म्यौ, चंद्रार्काविव विश्रुतौ ॥ ५ ॥

श्रेष्ठिनः सर्व्वदेवस्य, पार्श्वनागः सुतोऽजनि ।
लक्ष्मीकुक्षिभवा शांता, तस्य स्वामिणिरात्मजा ॥ ६ ॥

जाने सधर्म्मचारिण्यौ, धर्म्मकर्म्मोंकिकर्म्मठे ।
सामाकस्य सदा भक्ते, वीरविजयजसंज्ञिते ॥ ७ ॥
वीरिकाया सुते जाते, जातिमान्ये शमान्विते । शीताजस्यौ जिनाधीशधर्म्माराधनतत्परे ॥ ८ ॥
स पुत्रस्तत्र शीताया, आसदेवाभिधोऽभवत् । ततो भूतौ सुतावाभू-शोभनदेवनामकौ ॥ ९ ॥
अमूंता नन्दनौ जस्यास्तुडूडियशोधरौ । भिदा यशकुमाराख्यौ बभूवतुस्तयो सुतौ ॥ १० ॥
वपनाख्या [illegible] तपना, पश्चात्सुत सुनोत्तमान् । कुंआत पाडनान् पाडुयशःशुभितभूतलान् ॥ ११ ॥
तेषामाम्रप्रसादाख्य, आद्यो देवधर सुत । रामदेवकुलश्चांडूयशोधवलसंज्ञितौ ॥ १२ ॥
यचाप्यद्भुतधर्म्मकर्म्मनिरता यचापि पुण्याञ्चिता यचात्सुभभवप्रपञ्चविमुखा यचापि सत्यप्रिया ।
यचे पञ्चमहाव्रतैकरुचय यचापि शुद्धाशया, साधु पंचजनौघमौलितिलका यचापि कीर्त्ति परा ॥ १३ ॥
अभूदाम्रप्रसादस्य, सज्जनी वरगेहिनी । ज्ञानविज्ञानयोः पात्र, तनुज. सांहडलयो ॥ १४ ॥
जाया देवधरस्याभीत्, श्रेष्टिन श्रेष्ठानिधे । सांतूश्चाया सुता माद्, धामकैरवकौमुदी ॥ १५ ॥
आभडो नरसिंहश्च, जाजो सूलबलयौ । जगदेवाख्यलाखाकुचाहडा श्रुतशालिन ॥ १६ ॥
व्याया मियमवि नामा सजाता तदनु कुमरदेवीति ।
लक्ष्मी त्वविहवदेवी वधूटिका तस्य विनययुता ॥ १७ ॥
भार्याऽभूत्पामदेवस्य, पद्मीति नन्दनात्वमी । धांधो वयरसिंहश्च, पुनपश्च जयन्तू सुता ॥ १८ ॥
अन्यच्च-येन जिग्ये जगत् देवगुरुभक्त्याऽखिलं भृशं ।
जगदेवस्य तत्यामादैवान्हानि (दैवाद्गात्रनिर) कारणं ॥ १९ ॥
इतश्चतुर्भि सबन्ध ॥ ज्ञात्वा येन लघीयसाऽपि सहसा स्वस्यातनाज (भार्ये) क्षणाद्
दान्याचा व्रतिन स्वयं तदखिलं कृत्वाऽऽत्मकृत्य स्फुट ।
त्यक्त्वा स्नेहभरोत्तमा मन्दनेनाचार्य धर्म्मस्य यं (यो)
निर्ग्ये मोहमहामहीपमतितिप्रान्त्यप्रभावोऽव्ययो ॥ २० ॥
आबाल्यादपि येन पूर्णविधिना भक्त्याऽर्च्चित श्रीजिन-
स्तापर्यर्दातताविना सुगुरवोऽभ्यस्त च शास्त्र पर ॥
या माधैर्विनयादिभिर्वरगुणैगचंद्रकाउ कलौ
चन्द्रार्क चक्रानकार्तिगुण स्वच्यैर्दिनैगर्जिता ॥ २१ ॥
श्रीयेगशाब्रवृत्तेर्देवधरेणा मधुरमहितेन ।
निस्सगचित्तमुनिव मात्सरमरहितेन ॥ २२ ॥
साधुमनजनितबोध निर्दोषं दुष्कब्रगमतन् ।
तत्पालनुनस्य जगदेवस्य श्रेयसेऽलेखि ॥ २३ ॥

यद्दोषैरकलंकितं गुणगणैर्युक्तं मनोहारिभि-
र्नित्याभ्यासरसेन निर्वृतिकरं दिव्योक्तसाधुक्रियं ।
श्रीभूपालकुमारपालसहितं श्रीहेमचंद्रप्रभोः
कर्म्मव्याधिविबाधकं विजयतां तद्योगशास्त्रं सदा ॥ २४ ॥
सूर्याचंद्रमसोर्यावद् द्योतयंति भुवं रुचः । अस्यंतं पुस्तकं तावत्, कोविदैर्वाच्यतामिदं. ॥ २५ ॥ छ ॥

## श्री शांतिनाथजी ज्ञान भंडार. खंभात.

**श्रीसिद्धांतसारसमुच्चयः** ता. प्र. ४१

संवत् १२१२ आषाढ वदि १२ गुरौ ॥ लिखितेयं सिद्धांतोद्धारपुस्तिका लेखक **देवप्रसादे**-नेति ॥ छ ॥ ग्रंथा ग्रं. १६३० द्वितीयखंडे ॥ छ ॥

शिष्यांभोजवनप्रबोधनरवेः श्री**धर्मघोषप्रभो**र्वक्त्रांभोजविनिर्गताः
( सुविशदाः ) सिद्धांतसत्काअमी ।
पर्याया गणि**चंद्रकीर्त्ति**कृतिना संचिंत्य संपिंडिताः,
स्वस्य श्री**विमलाख्यसूरि**गणभृत्शिष्येणचिंताकृते ॥ १ ॥
अस्ति श्रीमदखर्वपर्वततिभिः सर्वोदयः क्ष्मातले,
छायाछन्नदिगंतरः परिलसत्भव्यावलीसंकुलः ।
सेवाकारी नृणां नवीनफलदोऽप्यश्रांतसांद्रद्युतिर्निश्छिद्रः
शरलत्वकेतुनिकरः **प्राग्वाटवंशः** सतां ॥ २ ॥
मौक्तिकहारसंकासः, समामीत्त(भाभूत्तत्र)**वनीहिलः** ।
श्रावको गुणसंयोगान्नराणां हृदये स्थितः ॥ ३ ॥
समजनि **धनदेवः** श्रावकस्तस्य सूनुः,
प्रथितगुणसमुद्रोऽमंदवाणी विसेः ( शेषात् ) ।
गगनवलयरंगत्कीर्त्तिचंद्रोदयेऽस्मिन्,
लगति नवलंकार ॥ जनयन्यसकते ( ? ) ॥ ४ ॥
तस्य चभार्येन्दु....मतो....मांच....पुत्रः
**गुणरत्नो** ( गुणरत्नै ) करोहणाचलः धर्म्मव[ट]नद्रुम मलयः
कीर्त्तिसुधाधवलितसमस्तविश्ववलयो यशोदेव श्रेष्ठी, ॥ ५ ॥
तस्य च—आंबोति नाम्ना
जनवत्सलाऽभूद् भार्या **यशोदेव** गृहाधिपस्य ।
यस्याः सतीनां गुणवर्णनायामाद्यैव रेखा क्रियते मुनींद्रैः ॥ ६ ॥

तयोश्च पुत्रा दयरण त्याम्बिग वीरदेवाख्यावभूत् ।
सोली थोली सोखी नामानश्च पुत्रिका संजज्ञिरे ॥ ७ ॥

अन्यदा च—

सिद्धान्तैर्नवद्वादशेन जिनशासनानुरंजितचित्तेन
यशोदेवश्रावकेण सिद्धांतविचारपर्यंत्यपुस्तिका लेखयामास ॥ ८ ॥

पूज्यश्रीविमलाख्यसूरिगणगच्छस्वस्य चारित्रिणो,
येऽस्मान्मी गणिचंद्रकीर्तिविदुषो विद्वज्जनानंदिनो ।
सावार्थस्मृतिहेतवे परिस्मरणान्यथा,
पुस्तिका सोऽभ्यमाचि तस्य गुणमक्षयशोदेवेन निर्मापिता ॥ १ ॥

यावच्चंद्ररवि नमस्तलपुरो यावच्च देवाचलो
यावत्सम्मुद्रमुद्रितमही यावन्नभोमंडलं ।
यावत्स्वर्गविमानमंतरिक्षं यावच्च दिग्दन्तिनः
स्तावत् पुस्तकमेतदस्तु सुधिया व्याख्यायमानं मुदे ॥ २ ॥

इति प्रशस्ति । समाप्त ॥ छ ॥

## श्री शांतिनाथजी ज्ञान भंडार. खंभात.

श्री पर्युषणाकल्पम् ता. प्र. ९२

संवत् १३०० वर्षे कार्तिक वदि १३ शनौ पर्युषणाकल्पपुस्तिका लिखिता ॥ छ ॥ छ ॥

सूरिः श्रीमान्नायकोऽजनि यशोभद्राभिधेयः प्रभु
श्रीशान्तिसुमतीश्वरौ च गुरव श्रीशांतिसूरिस्ततः ।
श्रीमानीश्वरशान्तिसूरिसुमति श्रीशांतिसूरीश्वरा
श्रीषंडेरगणे क्षमाभिसहिता कुर्वंतु वो मंगलं ॥ १ ॥

अपिच—

य सद्वृत्तिविनिर्मितास्तिजनप्रतिप्रकर्षोदय
प्रोद्भूतोल्लसितभासुर सच्छाखाली सुपर्वंतन ।
धर्म्माय प्रवरेण भूरिविलसपद्मेनाचित
स श्रीमान् जगतीतले विजयतां वरास्थिर धर्क्कट ॥ २ ॥

लक्ष्मीवती विमले सलक्ष्मि सुकृती सात्विको यस्येष—
स्तस्यमो येष्ठुसो गुणगणवनविरामपूर्व्वोधरस्य ।
आशापालस्तदन्यो निजकुलतिलको दानदाक्षिण्यदक्षः
[illegible] ॥ ३ ॥

आसधरस्य या पत्नी, शीलालंकारधारिणी ।
आसमति नाम पुत्रोऽस्याः पूर्वो मा(ला)ल्हणाभिधः ॥ ४ ॥
द्वितीयो जालणो नाम शुद्धवंशोद्भवः सुधीः ।
(सुरद्रुणा समो) दीने, वूडाकस्तु तृतीयकः ॥ ५ ॥
वुडाकस्य प्रिया सौम्या, रत्नश्रीः सत्यशालिनी ।
दयादाक्षिण्यविभवा, सत्यसंतोषशालिनी ॥ ६ ॥
सद्गुरोश्चरणांभोजषंडषट्पदसोदरा । तस्याः पुत्रो बभूवायं, पासडाख्यो महामतिः ॥ ७ ॥
आसपालप्रिया जाता,मूहवाख्या वरानना ।तस्याः सुतः सतां मान्यो गोसलः पुण्यमंदिरं ॥ ८ ॥
गोसलस्य प्रिया सौम्या वस्तिनी शुद्धवंशजा ।
जेहकाख्यः प्रियः पुत्रो, नरसिंहो द्वितीयकः ॥ ९ ॥
ललना पासडस्येयं धनश्री धर्म्मकांक्षिणी ।
अच्छुतोऽस्यादभूत्भूत्ऽन्योस्मा सूनुर (ऽपि) जांजणाभिधः ॥ १० ॥
जेहकस्यांगना जाता विल्हुका बंधुवंधुरा ।
पुत्रस्तस्याः सदा सौम्यः, सामताक्तो कृपानिधिः ॥ ११ ॥
संसारे दुःखवो (रूपे) कथमपि दुलभं (चटुचं) लभ्यते मानुषत्वं
तस्मिन् धर्म्मप्रभावे विलसति कमला स्वप्नवच्चंचला सा ।
रत्नश्री प्राप्य शुद्धां जिनवचनततिःश्राविकाद्येषु वित्त-
व्याजादाकल्प(कालं)....पुनरपिच पटे निश्चलां तां करिष्ये ॥ १२ ॥
॥ छ ॥ छ ॥ शुभं भवतु ॥ छ ॥

## ८०८४ श्री शांतिनाथजी ज्ञान भंडार. खंभात.

श्रीउत्तराध्ययनलघुवृत्तिः ता. प्र. ४३

भाग्वाटवंऽशेजनि मोहणाख्यः श्रेष्ठी प्रिया तस्य सुहागदेवी ।
तयोः सुतो नागडनामकोऽभूत्तस्यापि भार्या सलषू प्रसिद्धा ॥ १ ॥
तयोस्तु नारायणनामधेयः पुत्रोऽभवत् स्फूर्जितभागधेयः ।
चित्रं गुरुत्यागकृता(वर्ता)रोऽपि यः सदा धार्म्मिकलोकधुर्य ॥ २ ॥
तस्याभूत्कडुयाभिख्योऽनुजो धरणिगस्तथा ।
तयोः प्रियतमा लापू जासलेति यथाक्रमं ॥ ३ ॥
नारायणस्य संजज्ञे, हंसलेति सधर्म्मिणी ।
रत्नपालोऽभिधानेन, पुत्रोऽभूत् हृदयप्रियः ॥ ४ ॥

जैनधर्मधुरावुर्य श्रेष्ठी नारायणोऽन्यदा । श्रीमद् देवेंद्रसूरीणामिति वाक्यामृतं (पपौ) ॥ ५ ॥
तथाहि-विषयसुखपिपासोर्गेहिनः क्वास्ति शीलं ?, करणवशगतस्य स्यात्तपो वापि कीदृक् ?।
अनवरतमदभ्रारम्भिणो भावना किं ?, तदिह नियतमेकं दानमेवास्य धर्म्म ॥ ६ ॥

तच्च त्रिधा सर्वविदो वदंति, ज्ञानाभयोपग्रहदानभेदात् ।
तत्रापि निःशेषविकासनेन, सज्ज्ञानदानं प्रवरं वदंति ॥ ७ ॥
काळादिदोषात् मतिमांद्यतश्च, तत्राधुना पुस्तकमंतरेण ।
न शक्यते कर्तुमतोऽत्र युक्तं, सत्पुस्तकलेखनं हि ॥ ८ ॥
एवं निशम्य सम्यक् श्रेष्ठी नारायणो विमलबुद्धिः ।
इदममलमुत्तराध्ययनपुस्तकं लेखयामास ॥ ९ ॥
यावद्व्योमसरोवरे निरुपमे पक्षद्वयालंकृतौ,
ज्योतिर्नालजटालनिर्मलजले श्रीराजहंसाविह ।
अज्ञानप्रसरांधकारनिकरप्रध्वंसदीपोपम-
स्तावन्नंदतु पुस्तकोऽयमनिशं व्याख्यायमानो बुधैः ॥ १० ॥ छ ॥ ॥ छ ॥

## ७०२८ श्री शांतिनाथजी ज्ञान भंडार. खंभात.

**श्रीआवश्यकलघुवृत्तिः** ता. प्र. ४४

संवत् १४४५ वर्षे चैत्र वदि ३ सोमे श्रीस्तंभतीर्थे कायस्थ ज्ञातीय महं- जाना सुतमं० माल्हाकेन लिखितं ॥ छ ॥

जैनवाक्याभिचारिमात्रसुमना सर्वेऽपि यस्मिञ्जना-
स्तस्मिन् धर्ममयश्च समृद्धिविशदे वशेऽवकेशाह्वये ।
श्राद्धोऽभूज्जरसिंह इत्यभिधयासाधु प्रसिद्धः सुधी
स्तस्य प्रौढगुणा बभूव नयणादेवीति विख्या प्रिया ॥ १ ॥
तयोरभूवंस्तनयास्त्रयोऽमी, भूनाल-माल्हा-महिपालसंज्ञाः
माल्हाभिधस्तेषु विशेषधर्मी, पुण्याय पाणिग्रहणे निषेधात् ॥ २ ॥
तेषु च महिपालस्यानि माल्हणदेविनामिका पत्नी ।
सपुत्रा मेघा-नासण-सहदे-साल्गिा सुगुणा ॥ ३ ॥
श्रीतपागच्छगगनाब्जारैकविराजमानर्तां ।
श्रीदेवसुंदरगुरुसूरीणामुपदेशात ॥ ४ ॥
माल्हणदेवीसुविशुद्धवासनाऽऽवश्यकस्य लघुवृत्तिं ।
लेखयति स्म शरानुधिशकाब्दे (१२७५) स्तंभतीर्थपुरे ॥ ५ ॥
सुरादिदर्शस्थितिसिद्धताराग्मुक्तावलीकं वियदातपत्रं ।
श्रीसंघराजोपरि यावदास्ते, स पुस्तकं नंदतु तावदेतत् ॥ ६ ॥

# श्री शांतिनाथजी ज्ञानभंडार. खंभात.

श्री विवेकमंजरीवृत्तिः ता. प्र. ४५

नमः श्रीवीतरागाय ॥ यन्नाममात्रवशतोऽपि शरीरभाजां, नश्यंति सामजघटा इव दुःकृतौघाः।
पादाग्रलांछनमृगेंद्रसुवा भियेव, देवः (स वः) शिवसुखं वितनोतु वीरः ॥ १ ॥
विस्तीर्णोऽर्व क्षितिरुह इव श्लाघ्यमूलप्रतिष्ठः, प्राग्वाटाख्यो गरिमगुणवानन्वयोऽतिप्रधानः।
लक्ष्मीर्यस्मिन्नवकिसलयश्रेणिशोभां बिभर्ति घोरान्धाकाराविकं च(नवनव)कुसुमोद्दामसाम्यं च कीर्तिः ॥२॥
आद्यस्तत्रानवद्यश्रीः सोदः श्रीद इवाभवत्।
विश्राणनेन यः श्रियं, तत्याज न कुलीनतां ॥ ३ ॥
वीरदेव्यभिधया शुभलीला, तस्य शीलपरिपालनशीला।
देहिनीव कमला विमलाऽभूद्, गेहिनी सुकृतनिर्मलबुद्धेः ॥ ४ ॥
चंद्र इव पुण्यदेवः सुतस्तयोः सुगुणकिरणसंपूर्णः।
दोषाश्रितो न चित्रं कलंकितां न भजति यस्तु ॥ ५ ॥
लोकोपकारकरणाद्विजयाद्यसिंहसूरेरुपास्तिजननाज्जिनबिंबकृत्यैः।
पुत्रद्वयव्रतविधापनतश्च चक्रे, यः सार्थकं द्रविणमायुरपि स्वकीयं ॥ ६ ॥
तस्य च प्रियतमाऽजनि रम्या वाल्हिविः शशिसमुज्ज्वलशीला।
वीतरागचरणार्च्चनचित्ता, क्षेत्रसप्तकवितीर्णसुवित्ता ॥ ७ ॥
कृत्तोपतापनियमं विधिनोपधानाभिख्यं तपः शिवसुखाय विधाय धैर्यात्।
मालाधिरोपणमकारयदात्मनो यो, द्वेषद्विपो विजयसिंहगुरोः कराग्रः ॥ ८ ॥
त्रयो (ततो) मणिक्षोणिरसावसूत, सुतान् दिगीशान् स्फुटमष्टसंख्यान्।
ये पुण्यकाष्टाश्रितचेतसोऽपि, चित्रं न संक्रंदनयोगमापुः ॥ ९ ॥
भोगिभोगायितभुजस्तंभः कुलगृहं श्रियः।
आद्यस्तत्राभिरामश्रीः, ब्रह्मदेवोऽभवत्सुतः ॥ १० ॥
अभिरामगुणग्रामद्रुमारामवसुंधरा। दयिती पोइणिस्तस्य, बभूव (मधुरस्वरा) ॥११॥
वासनावासितस्वांतश्चंद्रावत्यां महत्तमे।
यश्चैत्ये कारयामास, बिंबं वीरजिनशितुः ॥ १२ ॥
यः पद्मदेवसूरेर्गुरोः कृते शुभमतिः स्ववित्तेन।
चरितं त्रिषष्टिमध्यादलेखयत् प्रथमतीर्थकृतः ॥ १३ ॥
द्वैतीयीको बोहडिरभवत्तनुजो गुणव्रजनिकेतं।
एनत्यावीति कुटुं विनिचं च .. (एतस्यजावोति च कुटुंबिनिसद्गुण)कदंबा ॥१४॥

स्वकीयवंशे भुवनाग्रतंचे ध्वजानुसार दधदग्रजन्मा ।
सद्धर्मनिर्मोपगदत्तपितृवित्तस्तयोर्विल्हणसंज्ञ आद्य ॥ १५ ॥

सती सतीसंहतिशीर्षरत्न, तस्य प्रिया जैनपदाब्जभृंगी ।
बभूव दानादिगुणप्रधाना सन्मानसा रूपिणिनामधेया ॥ १६ ॥

द्वितीय आल्हणश्चाभूद्, माग्यसौभाग्यजन्मभू ।
अनन्यजनसामान्यसौजन्यमणिरोहण ॥ १७ ॥

जल्हणस्तृतीय सुनुश्चतुर्थो मल्हणाभिध ।
समभूमोहिनी चापि, सुता स्वजनमोहिनी ॥ १८ ॥

जल्हणस्य तृतीयस्य, नाउ जाया शुभाशया ।
वीरपालो वरदेवो, वैरिसिंह सुतास्तयो ॥ १९ ॥

बहुदेवस्तु तृतीयो यश्चारित्रं च सूरिपदवीं च । संप्राप्य नाम लेभे सूरिश्रीपद्मदेव इति ॥ २० ॥
चतुर्थ आमणश्चारुगुणमाणिक्यमण्डित । पचमो वरदेवाख्य, स सत्यविहितोद्यम ॥ २१ ॥
षष्ठ पंडितसहतिचतुर स्फूर्जद्यशा यशोवीर । आचार्यपदे लेभे, श्रीपरमानंद इत्यभिधा ॥ २२ ॥
सप्तमो वीरचंद्राख्योऽजन्यनूनगुणावलि । समभूज्जिनचंद्राह्व, प्रकृष्टवपुरष्टम ॥ २३ ॥

वाहडिजविल्हणस्य च पुत्रचतुष्यमनूनगुणरूपा ।
रूपिणिकुक्षिसरोवरकलहसनिभं विवेकयुत ॥ २४ ॥
आशापाल कीर्तिलताल्वाल, सीधू नामा सूरिधामा द्वितीय ।
तार्तीयिकोऽभूज्जगसिंहसंज्ञस्तुर्य सुनु पद्मसिंहाभिधान. ॥ २५ ॥
वीरीलि (नाम्ना) . . सुगुणै पवित्रा, मनोहरा साहरिणी सुनेत्रा ।
अभूच्छुभाचारपवित्रपात्रा, सद्रूपलावण्यविशुद्धगात्रा ॥ २६ ॥
आशाद्य पुत्र इह (तयेह जाशाप्रसुत ) तृतीय , कामप्रदा संयमराज्यलक्ष्मीं ।
क्षिप्र तथा सूरिपद च लभे, सुदुर्लभं पुण्यवतापि पुंसा ॥ २७ ॥
प्रथमस्याशापालस्य खेतुसाकुक्षिसभवा ।
सज्जनोऽभयसिंहाख्य, सुजाऽः सहज सुता ॥ २८ ॥
सीधूकाख्यद्वितीयस्य, सोहागेयमभद् वधू ।
अगण्यपुण्यदाक्षिण्यशरण्यादिगुणान्विता ॥ २९ ॥
तुर्यस्य पद्मसिंहस्य, वाल्हूनाम्नी प्रियाऽभवत् ।
गुनस्तयो समुपन्नो, नागपालाभिध सुधी ॥ ३० ॥
रूपं यत्र च विभवो विनयाभिध (पानो,) नारोगता तरिमा प्रियसंप्रयोग
नानाद्भूतपटचचत्क्रमेर सर्व, विज्ञाय धर्मविगुणैर्भविभिर्विमान्य ॥ ३१ ॥

अंगुष्ठमात्रं यो बिंबं, कारयेदर्हतां बुधः । सिद्धिनारीपरीरंभभवं स लभते सुखं ॥ ३२ ॥
न मनःपर्ययमवधिर्न केवलज्ञानमात्र नैवास्ति । पुस्तकलेखनमेतत्, तद्यष्टिर्दष्टिहीनानां ॥ ३३ ॥
श्रीरत्नप्रभसूरेर्गुरोः सकाशान्निजस्य सद्बंधोः । संसारांभोधितरीं श्रुत्वेत्यथ देशनां विशदां ॥ ३४ ॥
द्दाडापद्रपुरे चैत्ये, कारयामास भावतः । श्रीमतः सुमतेर्बिंबमर्हतस्त्रिजगत्पतेः ॥ ३५ ॥

आलेखयामास किलासपालः श्रेयःश्रिये स्वस्य पितुः प्रधानं ।
विवेकमंजरीभिधां ध्यानं (र्यभिधानमेतत्) सत्पुस्तकं निर्वृतिदीपकल्पं ॥ ३७ ॥

यावत् पूर्वाद्रिशृंगाश्रित इह जगति स्वप्रतापेन हंति
प्रोद्यन्नीलं (प्रगाढ) तिमिरभरमरं तापन सूत (स्तत्) समंतात् ।
यावच्छेपाहिराजः क्षितिवलयमसौ स्फूर्तिमान् संबिभर्त्ति
श्रेयोधिष्ठानयानप्रवरर . . . भः (समयः) पुस्तकस्तावद्दास्तां ॥ ३९ ॥

चक्षुर्लोचनविष्टपात्रिनयनप्राग्भूतसंवत्सरे (१३२२)
मासे कार्तिकनाम्नि चंद्रसहिते कृष्णाष्टमीवासरे ।
वृत्तिर्निर्वृतिमार्गदीपकलिकातुल्या विनीतात्मना
रागेण स्वयमादरेण लिखितानन्यादनिंद्याक्षरा ॥प्रशस्ति समाप्ता (श्रेयसे)॥शुभमस्तु॥

पूज्यश्रीपद्युम्नसूरिभिः प्रशस्तिः शोधितेति ॥

## ७०२३ श्री शांतिनाथजी ज्ञान भंडार. खंभात.

श्रीज्ञाताधर्मकथाद्यंगवृत्तिः ता. प्र. ४६

ग्रंथा ग्रं. ९०० ॥ छ ॥ छ ॥ मंगलं महाश्रीः ॥ छ ॥ संवत् १२९५ वर्षे चैत्र शुदि २ मंगलदिनेऽद्येह श्रीमदनहिल्लपाटके महाराजाधिराज श्रीभीमदेवविजय कल्याणराज्ये ज्ञाताधर्मकथांगप्रभृतिषडंगीसूत्रवृत्तिपुस्तकं लिखितं ॥ छ ॥ छ ॥ छ ॥ मंगलं महाश्रीः ॥

॥ ९० ॥ अस्ति विस्तारवानुर्व्यामच्युतश्रीसमाश्रयः ।
नदीनः सत्वसंपूर्णो, दीशापालान्वयोऽर्णवः ॥ १ ॥
तस्मिन् देउकनामा त्रासविहीनोऽभवत् पुरुषरत्नं ।
विजयमतिरस्य पत्नी बभूव धर्मैकनित्यमतिः ॥ २ ॥
तयोरभूतां तनयौ नयान्वितौ निजान्वयव्योममृगांकभास्करौ ।
सोल्लाक वील्हाक इतिप्रसिद्धौ, माढश्री (श्रि) पुत्री धनपालमाता ॥ ३ ॥
सोलाकस्याभवत् पत्नी, मोहिणीति तयोः सुतः ।
महणाख्य इति ख्यातः, सम्यक्त्वे निश्चलाशयः ॥ ४ ॥
वील्हाकसत्का दयिता दयाढया सोपुः सदाचारविचारचारुः ।
संचिंत्य संसारमसारमेषा धर्मार्थमर्थव्ययमाततान ॥ ५ ॥

पुरुषार्था इव मूर्ताश्चत्वारो नंदनास्तयोर्जाता ।
कर्तुमिव तुल्यकालं, जिनोक्तधर्मं चतुर्भेदं ॥ ६ ॥
प्रथमस्तत्र जयंतो वीराख्यस्तदनु दनु (ज) तिहुणाह्वौ ।
जाल्हणनामा तुर्यं, पंचत्वं प्राप तत्राव ॥ ७ ॥
वीरस्ततोऽन्यदाऽश्रौषीच्छोकशंकुविनाशकं ।
श्रीजगच्चंद्रसूरीणां, वच सर्वज्ञभाषितं ॥ ८ ॥

तद्यथा—

चला समृद्धिः क्षणिकं शरीरं, बधुप्रबंधोऽपि निजार्थबद्धः ।
भवांतरे संचलितस्य जंतोर्न कोऽपि धर्मादपर सहाय. ॥ ९ ॥
कुबोधरुद्धे भुवने न बुध्यते, स्फुट जिनेंद्रागममंतरेण ।
फलौ भवेत्सोऽपि न पुस्तकं विना विधीयते पुस्तकलेखनं तत ॥ १० ॥
स्वभ्रातु श्रेयसेऽलेखि ततस्तेन सबंधुना ।
ज्ञाताधर्मकथागादिषडंगी वृत्तिसंयुता ॥ ११ ॥
जंघराल्याभिधस्थाने, युगादिजिनमंदिरे ।
संघस्य पुरतो व्याख्यातैषा देवेंद्रसूरिभि ॥ १२ ॥
यावत् व्योमसर.क्रोडे, राजहंसो विराजत
तावत्कृतकृतिस्वातानन्द नंदतु पुस्तकं ॥ १३ ॥

सं० १२९७ वर्षे व्याख्यातमिति ॥ शुभं भवतु ॥ शुभमस्तु संघस्य ॥

## श्री शांतिनाथजी ज्ञान भंडार. खंभात.

**श्रीयोगशास्त्रं सटीकम् (श्रीहेमचंद्रः)** ता. प्र. ४७

स्वस्ति श्री विक्रमनृपत संवत् १२५१ वर्षे कार्तिक सुदि १२ शुक्रे रेवतीनक्षत्रे सिद्धयोगे महाराजश्री भीमदेवविजयि राज्ये अत्रनिजनिजाप्रशस्तकस्तुरिकानिलकायमान लाटदेशालंकारिणि सकलजनमनोहारिणि विविधधार्मिकविराजमाने दर्भवतीस्थाने श्रीमालवंशीय श्रे० साभानंदनेन जगदानंदनेन निर्मलतमसम्यक्त्वरंग श्रे० देवधरेण सकलधर्मकामविहितेन ठ० आभड नरसिंहादिपुत्रसहितेन निजपुत्र जगदेवश्रेयोनिमित्तं श्रीचंद्रगच्छप्रसिद्ध प्रबुद्ध पं० केशवमुनि पं० थोसरिहस्तेनाशेषविशेषज्ञानरनभूमनुकारीदमप्रतिमप्रतापश्रीजिनशासनप्रभावकश्रीकुमारपालभूपालविज्ञापितस्य श्रीहेमचंद्रसूरिविरचितस्य श्रीयोगशास्त्रस्य वृत्तिपुस्तकं लिखितमिति ॥ मंगलं महाश्री । शुभं भवतु लेखकपाठकवाचकानामिति ॥ छ ॥

# श्री शांतिनाथजी ज्ञान भंडार, खंभात.

**श्रीश्राद्धदिनकृत्यवृत्तिः** ता. प्र. ४८

नमः श्रीवर्द्धमानाय वर्द्धमानाय वेदसा ।
वेदसारं परं ब्रह्म, ब्रह्मवत्स्थितिनिश्चयः ॥ १ ॥

स्वबीजगुप्तं कृतिभिः कृषीवलैः, क्षेत्रेषु सिक्तं शुभभाववारिणा ।
क्रियेत यस्मिन् सफलं शिवश्रिया, पुरं तदत्रास्ति **दयावटाभिधं** ॥ २ ॥

ख्यातस्तत्रास्ति वस्तुप्रगुणगुणगणः प्राणिरक्षैकदक्षः
सद्ज्ञाने लब्धलक्ष्यो जिनवचनरुचिर्थंचदुच्चैश्चरित्रः ।
पात्रं पात्रैकचूडामणिजिनसुगुरूपासनावासनायाः
संघः सुश्रावकाणां सुकृतमतिरमी संति तत्रापि मुख्याः ॥ ३ ॥

**होनाकः** सज्जनः श्रेष्टः श्रेष्ठी **कुमरसिंहकः** ।
**सोमाकः** श्रावकः श्रेष्टः शिष्टधी**ररिसिंहकः** ॥ ४ ॥

**कडुयाक**श्च सुश्रेष्टः, **सांगाक** इति सत्तमः ।
**रवीस्वाकः सुहडाक**श्च, धर्म्मकर्म्मैककर्म्मठः ॥ ५ ॥

एतन्मुखः श्रावकसंघ एषोऽन्यदा वदान्यो जिनशास (नोद्यमी) ।
सदा सदाचारविचारचारुक्रियासमाचारशुचिर्वृतानां ॥ ६ ॥

श्रीमज्जगचंद्रमुनींद्रशिष्यश्रीपूज्यदेवेंद्रमुनीश्वराणां ।
तदाद्यशिष्यत्वभृतां च **विद्यानंदा**ख्यविख्यातमुनिप्रभूणां ॥ ७ ॥

तथा गुरूणां सुगुणैर्गुरूणां, श्री**धर्मघोषाभिधसूरिराजां** ।
सदेशनामेवमपापभावं, शुश्राव भावावनतोत्तमांगः ॥ ८ ॥

विषयसुखपिपासोर्गेहिनः क्वास्ति शीलं, करणवशगतस्य स्यात्तपो वापि कीदृग् ?
अनवरतमदभ्रारंभिणो भावनाः कास्तदिह नियतमेकं दानमेवास्य धर्म्मः ॥ ९ ॥

॥ किंच—

॥ धर्मः स्फूर्ज्जति दानमेव गृहिणां ज्ञानाभयोपग्रहै-
स्रेधा तद् वरमाद्यमत्र यदितो निःशेषदानोदयः ।
ज्ञानं वाचनपुस्तकैर्विरहितं दातुं च लातुं च वा,
शक्यं पुस्तकलेखनेन कृतिभिः कार्यस्तदर्थोऽर्थवान् ॥ १० ॥

श्रुत्वेति संघसमवायविधीयमानज्ञानार्चनोद्भवधनेन मिथः प्रवृद्धिं ।
नीतेन पुस्तकमिदं श्रुतकोशवृद्ध्यै वद्धादरश्चिरमलेखयदेव हृष्टः ॥ ११ ॥

यावज्जिनमतभानु प्रकाशिताशेषवस्तुविस्तार ।
जगति जयतीह पुस्तकमिद बुधैर्वाच्यता तावत् ॥ १२ ॥

ग्रथा म. १३००० ॥ मगल महाश्रीः ॥
लेखकपाठकदातारे ॥
समस्तसघो दीर्घायुर्भवतु ॥

## श्री शां. ज्ञा. भं. खंभात.

**श्रीसूत्रकृतागमूलम् निर्युक्ति' वृतिः** ता प्र. ४९

"सवत् १३४९ वर्षे मार्ग शु अचेह (दयाछा) (य) श्रे० होना श्रे० कुमरसींह श्रे० सोमा प्रभृति सघसमवायसमारब्धपुस्तकभाडागारे के० सीहाकेन लिखित ॥

## श्री शांतिनाथजी ज्ञान भंडार खंभात.

**श्रीव्यवहारसूत्रम् सवृत्तिः ( द्वितीय खड )** ता प्र. ५०

इति श्रीमलयगिरिविरचिताया व्यवहारटीकाया पचमोद्देशक समाप्त ॥ छ ॥ पचमो देशके ग्रथग्रं ९०५ ॥ छ ॥ मगल महाश्रीः ॥ ६०३ ॥ छ ॥

**वरहुडिया साधु० राहड सुत० लाहडेन** श्रेयोऽर्थे व्यवहारद्वितीयखड लिखापितमिति ॥ सवत् १३०९ वर्षे भाद्रपद सुदि १५ ॥

अस्तीह श्रेयपर्वप्रचयपरिचित क्ष्मामृदात्तप्रतिष्ठ
सच्छायाचारुवर्ण सकलसरलताल[illegible] शस्तवृत्त ।
पल्लीवालाख्यवशो जगति सुविदितस्तत्र मुक्तेव साधु
साधुव्राते प्रणता वरहुडिरिति सत्ख्यातिमान्नेमडोऽभूत् ॥ १ ॥

तस्यासत्तनया निशुद्धविनयास्तत्रादिमो राहडो
जज्ञेऽतो भयदेव इत्यभिधया लब्धप्रसिद्धिर्जने ।
उपज्ञो जयदेव इत्यहितम्वान्तोऽत्रयातधम तत ।
स्तत्रायस्यसदा प्रिया प्रियतमा लक्ष्मी तथा नाइकिः ॥ २ ॥

आद्याया जिनचद्र इत्यनुदिन सद्धर्मकर्मोचत
पुत्रश्चाहिणिस ज्ञता सहचरी तस्य त्वमी सूनव ।
ज्येष्ठोऽभूत् किल देवचद्र इति यो द्रव्य व्ययित्वा निज
सत्तीर्थेषु शिवाय सघपतिरित्याख्या सुधीर्लब्धवान् ॥ ३ ॥

नामधरात्येऽत्र महाधरायोऽतो वीरधवलाभिधमीमदेवौ ।
पुत्री तथा धाहिणी नामिकाऽभूत्, सर्वेऽपि जैनाह्रिसरोजभृगा ॥ ४ ॥

श्रीदेवभद्रगणिपादसरोरुहालेर्भक्त्या नमद्विजयचंद्रमुनीश्वरस्य ।
देवेंद्रसूरिसुगुरोः पदपद्ममूले तत्रांतिमौ जगृहतुर्यतितां शिवोत्कौ ॥ ५ ॥

नाइकेस्तु सुता जातास्तत्र ज्येष्ठो धनेश्वरः ।
खेतूनाम्नी प्रिया तस्य, अरसिंहादयः सुताः ॥ ६ ॥

द्वैतीयीकस्तु साधुश्रुतवचनसुधास्वादनातृप्तचित्तः
श्रीमज्जैनेंद्रबिंबप्रवरजिनगृहप्रोल्लसत्पुस्तकादौ ।
सप्तक्षेत्र्यां प्रभूतव्ययितनिजधनो लाहडो नामतोऽभूत्
लक्ष्मश्रीरित्यभिख्या सुचरितसहिता तस्य भार्या सदार्या ॥ ७ ॥

अभयकुमाराभिख्यस्तृतीयोऽजनि नंदनः ।
यो दध्रे मानसं धर्मश्रद्धासंबंधबंधुरं ॥ ८ ॥

धर्मे सहाया सहदेवसाधोः, सौभाग्यदेवीति बभूव जाया ।
पुत्रौ च पेढाभिधगोसलाख्यौ प्रभावकौ श्रीजिनशासनस्य ॥ ९ ॥

॥ किंच–

यो कृत्वा गुणसंघकेलिभवनं श्रीसंघमुच्चैस्तरां
श्रीशत्रुंजयरैवत प्रमृतिपुप्रख्याततीर्थेपु च ।
न्यायोपार्जितमर्थसार्थनिवहं स्वीयं व्ययित्वा भृशं
लेभाते सुचिराय संघपतिरित्याख्यां स्फुटां भूतले ॥ १० ॥

आघस्य जज्ञे किल पींवदेवीनाम्ना कलत्रं सुविवेकपात्रं ।
तथा सुता जेहडहेमचंद्रकुमारपालाभिधपासदेवाः ॥ ११ ॥

अभवद् गोसलसाधोर्गुणदेवीति वल्लभा । नंदनो हरिचंद्राख्यो देवतीति च पुत्रिका ॥ १२ ॥

जयदेवस्य तु गृहिणी, जाल्हणदेवीति संज्ञिता जज्ञे ।
पुत्रौस्तु वीरदेवो, देवकुमारश्च हाल्हश्च ॥ १३ ॥

शुभशीलशीलनपरा अभवंस्तेषामिमाः गृहिण्यस्तु ।
विजयसिरी–देवसिरी–हरसिणीसंज्ञा यथासंख्यं ॥ १४ ॥

एवं कुटुंबसमुदयउज्ज्वलवृपविहितवासनाप्रचयः
सुगुरोर्गुणगणसुगुरोः सुश्राव सुदेशनामेवं ॥ १५ ॥

दानशीलतपोभावभेदाद्धर्मश्चतुर्विधः । श्रयणीयः सदा भव्यैर्भाव्यभद्रपदप्रदः ॥ १६ ॥

विपयजसुखमिच्छोर्गेहिनः क्वास्ति शीलं ?, करणवशगतस्य स्यात्तपो वापि कीदृक् ? ।
अनवरतमदभ्रारंभिणो भावनाः काः तदिह नियतमेकं दानमेवास्य धर्मः ॥ १७ ॥

ज्ञानामयोपग्रहदानभेदात्चत्रिधा सर्वविदो वदंति ।
तत्रापि निर्वाणपथैकदीपं, सदज्ञानदानं प्रवरं वदंति । ॥ १८ ॥

कालानुभावान्मतिमांचतश्च, तच्चाधुना पुस्तकमंतरेण,
न स्यादतः पुस्तकलेखनं हि, श्राद्धस्य युक्तं नितरां विधातुं ॥ १९ ॥

इत्याकर्ण्य तत स्वविभवैः सुपुस्तकेऽस्मिन् सपत्रैर्व्यवहारद्वितीयं खंडं लिखितम् ॥ २० ॥
यावद् व्योम .............

## श्री. शां. ज्ञा. भं. खं.

श्रीज्ञाताधर्मकथासूत्र सद्वत्ति ता. प्र. ५१

संवत १३०७ वर्षे अस्तीह. [ विशेष. व्यवहारसूत्र. ता. प्र. ४६ मुजब )

## श्री. शा. ज्ञा, भं. खं.

श्रीआवश्यकबृहद्वृत्तिः ता. प्र. ५२

सवत १२९४ वर्षे पोष सुद १० भौमे लिखितं (विशेष. व्यवहार सूत्र. ता. प्र. ४६ मुजब).

## श्री शांतिनाथजी ज्ञान भंडार. खंभात.

श्रीआचारांगचूर्णिः ता. प्र. ५३

ग्रथा मं० ८३०० ॥ शुभं भवतु ॥ संवत् १३०३ वर्षे जेठ सुदि १५ लिखितमिदं ॥ ( विशेष. श्री. व्य. सू. ता. प्र. ४६ मुजब ).

## श्री शां. ज्ञा. भं. खंभात.

श्रीभगवतीसूत्रवृत्तिः ता. प्र. ५४.

ग्रथाग्रे १८६१६. शुभं भवतु ॥संवत् १२९८ वर्षे मार्ग सुदि १३ सोमे अद्येह बीजापुरे सा० सहदेव सा० राहडसुत लाहडेन सा० देवचंद्रप्रमृतिकुटुंबसमुदायेन चतुर्विधसंघस्य पठनार्थं वाचनार्थं च लिखापितमिति. ॥ संवत् १२९८ फागुण सु ३ गुरौ अद्येह बीजापुरे पूज्यश्री-देवचंद्रसूरिश्रीविजयचंद्रसूरि व्याख्यानत. संसारासारतां विचिंत्य सर्वज्ञोक्तं शास्त्रं प्रमाणमिति मनसि ज्ञात्वा सा० राहडसुतजिणचंद्रधणेसरलाहड सा० सहदेव सुत सा० पेढा- संघवी गोमल प्रभृति-कुटुंबसमुदायेन चतुर्विधसंघस्य पठनार्थं वाचनार्थं च लिखापितमिति

( विशेष. श्री. व्यव० सूत्र. ता. प्र. ४६ मुजब ).

## श्री शां. ज्ञा. भं. खंभात.

श्रीउपासकादिसूत्रवृत्तिः ता. प्र. ५५

संवत् १३०१ वर्षे फाल्गुन वदि १ शनौ अद्येह विजापुरे पंचांगीसूत्रवृत्तिपुस्तकं ठ० अरसिंहेन लिखितं ॥ उभय ११२८ ॥ संवत १३०१ वर्षे फाल्गुन वदि १२ शनौ इहैव मल्हादनपुरे श्रीनागपुरीयश्रावकैः पोषधशालायां सिद्धांतशास्त्रं पूज्यश्रीदेवेंद्रसूरिश्रीविजयचंद्रसूरिउपाध्याय-श्रीदेवभद्रगणेर्व्याख्यानतः संसारासारतां विचिंत्य सर्वज्ञोक्तं शास्त्रं प्रमाणमिति मनसि विचिंत्य. श्रीनागपुरीय वरहुडियासंताने सा० आसदेव (विशेष श्री पाक्षिक सूत्र वृत्तिः ता.प्र.नं.२५मुजब).*

## श्री शां० ज्ञानभं० खंभात.

श्रीचंद्रप्रज्ञप्तिवृत्तिः ता. प्र. ५६

ओकेशवंशे विशदे सौवर्णिकपुंगवोऽस्ति जगसिंहः ।
सुश्रावकगुणयुक्तश्चत्वारश्चा ( भवन् ) पुत्राः ॥ १ ॥
पुत्र्यौ पूनी वर्जू द्वितीयका साधु वइजपुत्रेण ।
लींबाकेन व्यूढा सद्भक्तिकृतादरा . . (नित्यं)
. . ( सा रत्नशेखराणां ) सूरीणामुपदेशतः ।
सा वर्जु श्राविका पुण्यप्रभूतोद्भववासना ॥ ३ ॥
श्रीस्तंभतीर्थनगरे चंद्रप्रज्ञप्तिवृत्तिवरशास्त्रं ।
शरवार्द्धिशक्रवर्षे १४४५ शिवासये लेखयामास ॥

## श्री शां० ज्ञान भं० खंभात.

श्रीत्रिषष्टीय ( तृतीयपर्व ) चरित्रं ता. प्र. ५७

मंगलं महाश्रीः ॥ ठ ॥ ठ १२९५ वर्षे आश्विन वदि २ रवौ अद्येह श्री वीजापुरपत्तने समस्तराजावलीपूर्वकं तपाक्रीयश्रीपोषधशालायां चरित्रगुणनिधानसमस्तसिद्धांतकलोन्मानेन पारगेन तपादेवभद्रगणि–मलयकीर्तिपंडितफुलचंद्रपंडितदेवकुमारमुनिनेमिकुमारमुनि प्रभृतिसभरतसाधून्

* उपरना. ता. प्र. नं ४५–४७–४८–४९–५० ना ग्रंथो, तथा. ता. प्र. २४–२५ ना. ग्रंथो वरहुडीआ वंशना श्रावकोए सं. १२९० थी. १३१० सुधीमां लखावेला छे. आ उपरांत बीजा पण संख्या बंध ग्रंथो ताडपत्र उपर ते वंशना श्रावकोए लखावेला छे. एमांना श्री. शां. ज्ञा. भंडारमांज उपर जणावेला ग्रंथो उपरांत. श्रीयोगशास्त्रसटीक. श्रीव्यवहारसूत्र वगेरे वरहुडीया श्रावकोना लखावेला ग्रंथो छे पण तेमां संवत नहि होवाथी अने प्रशस्ति. ता. प्र. ४४ प्रमाणेज होवाथी पुनरावृत्ति दोष टाळवानी खातर तेमनी प्रशस्तिओ नोंधी नथी.

तचरणकमलान् मक्तपरमश्रावक साधू० रतनपाल समस्त सद्वांतपुस्तकाना पौषधशालामर्गनिर्वाहक परमश्रावक श्रेष्ठि वीलहण द्वितीयमार्गनिर्वाहक साधर्मिकाना वासन्ततपर परमश्रावक ठ० आसपाल तृतीयमार्गनिर्वाहक निरतर पुस्तकसिद्धांत नविक्ष पभक्त्या सारतपर श्रावक सत् लाहण प्रभृतिभि समस्तश्रावकै त्रिवर्षीयपुस्तक समस्तसाधूना श्रावकाणा पठनवाचनपुण्यश्रेयोऽर्थं लिखापित लेखकपाठकाना शुभ भवतु

## श्री शां० ज्ञान भं० खंभात.

अनुयोगद्वारसूत्रम् ता प्र ५८

स १३०१ वर्षे अषाढ सुद १५ शुक्रे धवलक्कनगरनिवासिना प्राग्वाटवंशोद्भवेन व्य० पासदेवसुतेन गमकश्रेष्ठीणाकेन वृहद्भ्रातसीढाश्रेयोऽर्थं सवृत्तिकमनुयोगद्वारसूत्र लिखापितं ॥ छ० ॥

## श्री शां० ज्ञान भं० खंभात.

श्रीअनुयोगद्वारचूर्णिः ता प्र ५९

सवत् १३३२ वर्षे चैत्र सुदि ११ बुधे अद्येह धवलक्के ।

## श्री शां० ज्ञान भं० खंभात.

श्रीसिद्धहेमलघुचूर्णिः ता प्र ६०

सवत् १२६४ वर्षे श्रावणसुदि ३ रवौ श्री जयानंदसूरिशिष्येण अमरचंद्रेण आत्मयोग्या लघुचूर्णिकाया प्रथमपुस्तिका लिखिता ॥ शुभ भवतु लेखकपाठकयो ॥ छ ॥

## श्री शां० ज्ञान भं० खंभात.

श्रीहेमव्याकरणम् ता प्र ६१

सवत् १२९३ वर्षे आश्विन सुदि १५ सोमे स्तंभतीर्थे श्रीनेमिसूरि योग्या हेमव्याकरणपुस्तिका लिखापिता ॥

## श्री शां० ज्ञान भं० खंभात.

श्रीशब्दानुशासनबृहद्वृत्तिः ता प्र ६२

सवत् १२९८ वर्षे द्वितीयभाद्रपद वदि ७ गुरौ लिखितम्, शुभं भवतु चीनापुरे पौषधशालायां नन्दिनप्रमुखसर्वैः समस्तश्रावकैर्लिखापितं ॥

## ७०२२ श्री. शां. ज्ञा. भं. खंभात.

श्रीशब्दानुशासनकृद्बृहद्वृत्तिः ता. प्र. ६३

संवत् १३०० वर्षे विजापूरपौषधशालायां समस्तश्रावकैः कृद्बृहद्वृत्तिपुस्तिका लिखापिता। सा० रत्नपाल श्रे० वील्हण प० आसपाल सा० लाहडेन लिखापितं।

## श्री शां० ज्ञान भं० खंभात.

श्रीकथारत्नकोशः ता. प्र. ६४

( देवभद्रसूरिः )

संवत् १२८६ वर्षे श्रावण सुदि ३ बुधे अद्येह प्रल्हादनपुरे कथारत्नकोशपुस्तकमलेखीति भद्रमिति।

## श्री शां० ज्ञान भं० खंभात.

श्रीयोगशास्त्रशास्त्रविवरणम् ता. प्र. ६५

प्रशस्तिः॥ क....संवत् १२९२ वर्षे कार्तिक सुदि ८ रवौ धनिष्ठानक्षत्रे योगशास्त्रवृत्तिः—द्वितीयप्रकाशस्य लिखितेति॥ शुभं भवतु॥

## श्री शां० ज्ञान भं० खंभात.

श्रीआचारांगसूत्रनिर्युक्तिः ता. प्र. ६६

प्रशस्तिः॥ सर्वगाथासंख्या ३६७ आचारनिर्युक्तिः समाप्ता॥ आचारांगवृत्तिः १२३०० आचारसूत्रं २५०० निर्युक्तिः ४४७, संवत् १३०३ वर्षे मार्गवदि १२ गुरौ अद्येह श्रीमदणहिलपाटके महाराजाधिराजश्रीवीसलदेवराज्ये महामात्यश्रीतेजःपालप्रतिपत्तौ श्रीआचारांगपुस्तकं लिखितमिति। कल्याणमस्तु श्रीजिनशासनप्रवचनाय॥ मंगलं महाश्रीः॥

## ७०२४ श्री शांतिनाथजी ज्ञानभंडार. खंभात.

श्रीजीवसमासप्रकरणं सवृत्तिकम् ता. प्र. ६७

प्रशस्तिः॥ टी०॥ ग्रंथाग्रं. ६६२७, संवत् ११६४ चैत्र सुदि ४ सोमेऽद्येह श्रीमदणहिलपाटके समस्तराजावलिविराजितमहाराजाधिराजपरमेश्वरश्रीमज्जयसिंहदेवकल्याणविजय-

राज्ये एव काले प्रवर्तमाने यमनियमस्वाध्यायध्यानानुष्ठानरतपरमनैष्ठिकपडितश्वेतांबराचार्यभट्टारकश्री हेमचद्राचार्येण पुस्तिका लि० श्री०*

## ८०९२ श्री शांतिनाथजी ज्ञानभंडार. खंभात.

श्रीदेववदनक आदि प्रकरणानि ता प्र ६८

देववदण वदनक समाप्तम् ॥ छ ॥ छ ॥ सवत् १२९० वर्षे माघ वदि १ गुरु, दिने ॥ वरहुडिया नेमडसुत साहुसहदेव पुत्र सा० षेग, गोसलेन मातृ सौभाग्यदेवि श्रेयोऽर्थं ॥ लिखापित ॥ छ ॥ शुभ भवतु लेखकपाठकयो ॥छ॥ लिखित बीजापुरे. लिखापित लाहडेन, लिखितं पण्डित अमलेण ॥ ■ ॥

## श्री शां० ज्ञान भं० खंभात.

श्रीसमवायांगसूत्रसवृत्तिः ता प्र ६९

सवत् १३४९ वर्षे माघ सुदि १३ अद्येह दयावाय श्रेष्ठि होना श्रेष्ठि कुमरसिंह श्रे० सोमप्रभृतिसमवायसमारब्धपुस्तकभाडागारे ठ० सिंहाकेन समवायवृत्तिपुस्तक लिखित ॥ छ ॥

## श्री शां० ज्ञान भं० खंभात.

श्रीधर्माभ्युदयमहाकाव्यम् ता. प्र. ७०

सवत् १२९० वर्षे चैत्र सुदि ११ रवौ स्तभतीर्थवेलाकुलमनुपालयता मह० श्री-वस्तुपालेन श्रीधर्माभ्युदयमहाकाव्यपुस्तकमिदमलेखि ॥ ■ ॥ छ ॥ छ ॥ शुभमस्तु श्रोतृ-व्याख्यातृणा ॥ छ ॥

## श्री शां० ज्ञान भं० खंभात.

श्रीप्रत्याख्यानविवरणम् ता प्र ७१

सवत् १२४४ वर्षे जेष्ठ वदि ५ रवौ प्रत्याख्यान विवरण लिखितमिति ॥ बा लक्ष्मी-धरेणेति ॥ छ ॥

## श्री शां० ज्ञान भं० खंभात.

श्रीधर्मरत्नप्रकरणम् ता प्र ७२

धम्मरयणपगरण सम्मत्त ॥ठ॥ठ॥ ६०३ ॥ठ। मगठ महाश्री ॥ठ॥ शुभमवतु लेखक

* आ प्रत आचार्य मलधारी श्रीहेमचंद्रसूरिश्वरजीए पोताना हस्ताक्षरथी लखेली छे तेनो फोटो अमारा तरफथी प्रसिद्ध थयेल श्री जैन साहित्यसंग्रहमां आपवामां आव्यो छे

पाठकावधारणादिसमस्तश्रावकलोकजनानां ॥ छ ॥ सं० १३२५ वर्षे माघ वदि ९ सोमेऽद्येह **वीजापुरे** महाराजश्री**मद् अर्जुनदेव**कल्याणविजयराज्ये तन्नियुक्तमहं० श्री **सोम**प्रतिपत्तौ मालवके(म्य) व्य० सा० **रामचंद्र**सुत सा० **कुंरव(खे)रा**कस्य पठनश्रेयोऽर्थं स्वाध्यायपुस्तिका ठकु०. **विक्रमसिंहेन** लिखिता ॥छ॥ यादृशं.....................मम दोषो न दीयते.

## श्री शां० ज्ञान भं० खंभात.

**श्रीसूयगडांगवृत्तिः (सूत्रनिर्युक्तिसहिता)** ता. प्र. ७३

प्रशस्तिः ॥ सर्वसंख्याजातश्लोक १६६०० ॥ संवत् १३२७ वर्षे भाद्रपद वदि २ रवावद्येह **वीजापुरे** ॥

## श्री शां० ज्ञान भं० खंभात.

**श्रीदशाश्रुतस्कंधचूर्णिः** ता. प्र. ७४

संवत् १३२८ वर्षे आषाढ शुदि १२ गुरावद्येह **पयरोदु**ग्रामवास्तव्य ठ० **चंड**सुत ठ० **लक्ष्मणेन** दशाश्रुतस्कंधस्य चूर्णिर्लिखिता ॥ मंगलं महाश्रीः । शुभं भवतु लेखकपाठकयोः

## श्री शां० ज्ञान भं० खंभात.

**श्रीउत्तराध्ययनलघुवृत्तिः** ता. प्र. ७५

संवत् १२९६ चैत्र वदि १० सोमे बभूव सूतला....वेत्त(वण्यवेधाः) प्राग्वाट वंशजः ।
शिष्टाचाररतः श्रेष्ठी **धीनाको** नामसंयतः (सन्नयः) ॥ १ ॥
तत् कलत्रं तु **पद्मश्रीः रामश्री**रिव केवला ।
अभवत् **पासचंद्रा**ख्यस्तयोः सूनुः सुधार्मिकः । ॥ २ ॥
पौत्रस्तु **गुणपाला**ख्यो **धीनाकः** श्रेष्ठि अथान्यदा ।
श्री**देवेंद्रमुनींद्र**स्य देशनामश्रृणोदिति ॥ ३ ॥
ज्ञानाभयोपग्रहदानभेदादानं त्रिधा सर्वविदो वदंति ।
तत्रापि तीर्थात्रुटिकारणेन सुज्ञानदानं प्रवरं वदंति ॥ ४ ॥
कालादिदोषान् मतिमांद्यतश्च तन्नो भवेत् पुस्तकमंतरेण ।
चलश्रिया शाश्वतसौख्यकारि तल्लेखनं युक्तमतः सतां हि ॥ ५ ॥
श्रुत्वेति श्रेष्ठी **धीनाकः** स्वश्रेयोऽर्थमलेखयत् ।
पुण्यं श्रीउत्तराध्यायलघुसद्वृत्तिपुस्तकं ॥ ६ ॥

## श्री शां० ज्ञान भं० खंभात.

श्रीतत्त्वार्थसूत्र मूलं, वृत्ति भाष्यसहितम् ता. प्र. ७६

संवत् १४४५ वर्षे अश्विन शुदि ४ गुरौ अद्येह श्रीस्तंभतीर्थे तत्त्वार्थभाष्येण तत्त्वार्थवृत्ति पुस्तकेन लिखिता ॥ शुभं भवतु श्रीश्रमणसंघस्य ॥

## श्री शां० ज्ञान भं० खंभात.

श्रीत्रिषष्टीयचरित्रम् ता प्र. ७७

( अष्टमपर्व )

समस्तनिर्ग्रंथचक्रचूडामणिश्री कृष्णराजर्षिगच्छे सुविहितशिरोमणिश्रीपद्मचंद्रोपाध्याया वये भट्टारकश्रीपृथ्वीचंद्रसूरयस्त पपद्माकरदिनकरश्रीप्रभानंदसूरीणा सदुपदेशेन समस्तपृथ्वीतलारये(ख्याल) सुविदितगोत्रपवित्रिते सा० क्षेमधरपुत्रः सा० धनचंद्र मुनिचन्द्र देपालाभिधाः धनचन्द्रसुतौ पीमसींह कालाभिधौ । मुनिचन्द्रसुता छीहिल नोल्ह सीमसीह हालाभिधा । पीमसींहपुत्रौ लाहड नरपालौ, सोमसींहपुत्रा सा० धरणिग आसपाल दूल्हण काल्ह पार्श्वाभिधानाः तैः सद्गुरूणामुपदेशलेशं निशम्य संसारासारतां विचार्य संवत १३९१ वर्षे स्वमातुः सोमश्रीश्रेयोऽर्थं गृहीतमिदं नंदतादाचंद्रार्कं वाचकग्राहकैः सदा ।

## श्री शां० ज्ञान भं० खंभात.

श्रीओघनिर्युक्तिः ता प्र. ७८

संवत् १२८४ वर्षे फाल्गुनामावस्या सोमे अद्येह श्रीमदाघाटदुर्गे समस्तराजावलीसमलंकृतमहाराजाधिराजाधिराज श्रीजैत्रसिंहदेवः कल्याणविजयराज्ये तन्नियुक्त महामात्य श्रीजगत्सिंहे समस्तमुद्राव्यापारान् परिपंथयतीत्येव काले प्रवर्त्तमाने सा० उद्धरसूनुना समस्तसिद्धांतोद्धारकैः धुरंधरग विशुद्धसिद्धांतश्रवणसमुद्भूतप्रभूतश्रद्धातिरेकेण परमार्हत सा० हेमचन्द्रेण दशवैकालिक पाक्षिकसूत्र–ओघनिर्युक्त–सूत्र पुस्तिका लेखिना लिखिता, च ठ०साहडसुत श्रवणोपासक ठ० यदिहण सुत खेमसिंहेन । शिवमस्तु सर्वजगत ।

## श्री शां० ज्ञान भं० खंभात.

श्रीमहावीरचरित्रम् ता प्र ७९

संवत् ११९७ आसोय वदि १० दिने मघानक्षत्रे शुभयोगे च महावीरचरितं लिखितं ॥

## श्री शां० ज्ञान भं० खंभात.

श्रीउपदेशमालादिप्रकरणानि ता. प्र. ८०

संवत् १३०८ वर्षे वैशाख शुदि १४ बुधे गुणदा धारुभ्यां महणू पुत्रिकया आत्म-श्रेयोऽर्थं प्रकरणपुस्तिका ड० देवशर्म्मपार्श्वे लेखिता इति भद्रं ॥

## श्री शां० ज्ञान भं० खंभात.

श्रीआवश्यकटिप्पनकम् ता. प्र. ८१

संवत् १२९७ वैशाख(?) वर्षे मार्गे वदि १ शनिवारे आवश्यकटिप्पनपुस्तिका ठ० आस-पालयोग्यो ॥

## श्री शां० ज्ञान भं० खंभात.

श्रीशतपदिका ता. प्र. ८२

प्रशस्तिः—इयं च विक्रमाद् गुणरस (रवि) संख्ये वर्षे१२६३ श्रीमदार्यरक्षितसूरिशिष्याणां श्रीमज्जयसिंहसूरीणां पट्टालंकृतिकर्तृभिः धर्म्मघोषसूरिभिर्विदब्धा ततश्च तामतिगंभीरार्थत्वात् व्युत्पन्नमतीनामेव सुखावबोधां तदितरेषां तु किंचिदायासगम्यामेव ततस्तेषामवगम्य श्रीधर्म्मघोषसूरीणां श्रुतांतेवासिभिरपि तत्पदब्धतिब्धितैः (? . . . .) श्रीमहेन्द्रसिंहसूरिभिर्विक्रमादुदधिग्रहसूर्य-संख्ये संवत्सरे १२९४ सैव ग्रंथपद्धतिः क्वचिदाधानं क्वचिदुद्धरणं क्वचित्क्रमविरचनां च विधाय कानि .... .... वधिकान्यपि प्रश्नोत्तराणि प्रक्षिप्य सुकुमारमतीनामपि सुखावबोधा भवत्विति किंचिद्विस्तरवती विदधे ॥ छ ॥ भद्रमस्तु चतुर्विधसंघस्य .... ग्रंथाग्रं ५२०० इति शतपदिकाभिधाना प्रश्नोत्तरपद्धतिः समाप्ता ॥

## ८०९१ श्री शांतिनाथजी ज्ञान भंडार, खंभात.

ज्ञाताधर्म्मकथासूत्रवृत्तिः ता. प्र. ८३

प्रशस्तिः ॥ संवत् १८८४ माघसुदि १ रवौ अद्येह श्रीमदणहिलपाटके महाराजाधिराज-श्रीविजयसिंघदेवकल्याणविजयराज्ये ज्ञाताधर्मकथाद्यंगवृत्तिर्लिखितेति ॥

## श्री शां० ज्ञान भं० खंभात.

श्रीनंदिअध्ययनटीका (मलयगिरीया) ता. प्र. ८४

सं. १२९२ वर्षे वैशाख शुदि १३ अद्यह बीजापूरे श्रावकपौषधशालायां श्रीदेवभद्रगणि-

## श्री शां० ज्ञान भं० खंभात.

श्रीतत्त्वार्थसूत्रं मूलं, वृत्ति भाष्यसहितम् ता. प्र. ७६

संवत् १४४५ वर्षे आश्विन सुदि ४ गुरौ अद्येह श्रीस्तंभतीर्थे तत्त्वार्थभाष्येण तत्वार्थवृत्ति पुस्तकेन लिखिता ॥ शुभं भवतु श्रीश्रमणसंघस्य ॥

## श्री शां० ज्ञान भं० खंभात.

श्रीत्रिषष्टीयचरित्रम् ता. प्र. ७७

( अष्टमपर्व )

समस्तनिर्ग्रंथवन्यचूडामणिश्री कृष्णराजर्षिगच्छे सुविहितशिरोमणिश्रीपद्मचंद्रोपाध्यायान्वये महारकश्रीपृथ्वीचंद्रसूरयस्तत्पट्टाबरदिनकरश्रीप्रभानंदसूरीणां सदुपदेशेन समस्तपृथ्वीतलाख्ये(ख्यात) सुविदितगोत्रपवित्रिते सा० क्षेमंधरपुत्रः सा० धनचद्र मुनिचन्द्र देपालाभिधाः धनचन्द्रसुतौ पीमसींह भालाभिधौ । मुनिचन्द्रसुता छाहिल सोल्ह सीमसीह हाम्भिधा । पीमसींहपुत्रौ लाहड नरपाश्री, सोमसीहपुत्रा सा० धरणिग आसपाल दूल्हण वाल्ह पार्श्वाभिधानाः तैः सद्गुरूणामुपदेशतो निशम्य संसारासारतां विचार्य संवत् १२९१ वर्षे स्वमातुः सोमश्रीश्रेयोऽर्थं गृहीतमिदं नन्दतादाचंद्रार्कं वाच्यमानं बुधैः सदा ।

## श्री शां० ज्ञान भं० खंभात.

श्रीओघनिर्युक्तिः ता. प्र. ७८

संवत् १२८४ वर्षे फाल्गुनामावास्या सोमे अद्येह श्रीमदाघाटदुर्गे समस्तराजावलीसमलंकृतमहाराजाधिराजाधिराज श्रीजैत्रसिंहदेवः कल्याणविजयराज्ये तन्नियुक्त महामात्य श्रीजगत्सिंहे समस्तमुद्राव्यापारान् परिपंथयतीत्येव काले प्रवर्त्तमाने सा० उद्धरसूनुना समस्तसिद्धांतोद्धारकैः धुरंधरेण विशुद्धसिद्धांतश्रवणसमुद्भूतप्रभूतश्रद्धातिरेकेण परमार्हत सा० हेमचन्द्रेण दशवैकालिकपाक्षिकसूत्र–ओघनिर्युक्ति–सूत्र पुस्तिका लेखिता लिखिता, च ठ०साहडसुत श्रवणोपासक ठ० महिलण सुत खेमसिंहेन । शिवमस्तु सर्वजगत ।

## श्री शां० ज्ञान भं० खंभात.

श्रीमहावीरचरित्रम् ता. प्र. ७९

संवत् ११९७ आसोय वदि १० दिने मघानक्षत्रे शुक्रयोगे च महावीरचरित लिखित ॥

## श्री शां० ज्ञान भं० खंभात.

श्रीउपदेशमालादिप्रकरणानि ता. प्र. ८०

संवत् १३०८ वर्षे वैशाख शुदि १४ बुधे गुणदा धारुभ्यां महणू पुत्रिकया आत्मश्रेयोऽर्थं प्रकरणपुरितका ड० देवशर्म्मपार्श्वे लेखिता इति भद्रं ॥

## श्री शां० ज्ञान भं० खंभात.

श्रीआवश्यकटिप्पनकम् ता. प्र. ८१

संवत् १२९७ वैशाख(?) वर्षे मार्ग वदि १ शनिवारे आवश्यकटिप्पनपुरितका ठ० आसपालयोग्यो ॥

## श्री शां० ज्ञान भं० खंभात.

श्रीशतपदिका ता. प्र. ८२

प्रशस्तिः—इयं च विक्रमाद् गुणरस (रवि) संख्ये वर्षे१२६३ श्रीमदार्यरक्षितसूरिशिष्याणां श्रीमज्जयसिंहसूरीणां पट्टालंकृतिकर्तृभिः धर्म्मघोपसूरिभिर्विदब्धा ततश्च तामतिगंभीरार्थत्वात् व्युत्पन्नमतीनामेव सुखाववोधां तदितरेषां तु किंचिदायासगम्यामेव ततस्तेषामवगम्य श्रीधर्म्मघोपसूरीणां श्रुतांतेवासिभिरपि तत्पदव्धातिब्धितैः (? . . . .) श्रीमहेन्द्रसिंहसूरिभिर्विक्रमादुदधिग्रहसूर्यसंख्ये संवत्सरे १२९४ सैव ग्रंथपद्धतिः कचिदाधानं कचिदुद्धरणं कचित्क्रमविरचनां च विधाय कानि .... .... वधिकान्यपि प्रश्नोत्तराणि प्रक्षिप्य सुकुमारमतीनामपि सुखाववोधा भवत्विति किंचिद्विस्तरवती विदधे ॥ छ ॥ भद्रमस्तु चतुर्विधसंघस्य .... ग्रंथाग्रं ५२०० इति शतपदिकाभिधाना प्रश्नोत्तरपद्धतिः समाप्ता ॥

## ८०९१ श्री शांतिनाथजी ज्ञान भंडार. खंभात.

ज्ञाताधर्म्मकथासूत्रवृत्तिः ता. प्र. ८३

प्रशस्तिः ॥ संवत् १८८४ माघ सुदि १ रवौ अद्येह श्रीमदणहिलपाटके महाराजाधिराजश्रीविजयसिंघदेवकल्याणविजयराज्ये ज्ञाताधर्मकथायंगवृत्तिर्लिखितेति ॥

## श्री शां० ज्ञान भं० खंभात.

श्रीनंदिअध्ययनटीका (मलयगिरीया) ता. प्र. ८४

सं. १२९२ वर्षे वैशाख शुदि १३ अद्येह वीजापूरे श्रावकपौपधशालायां श्रीदेवभद्रगणि-

पं० मल्यकीर्ति पं० अजितप्रभगणिप्रमुखोना व्याख्यानत समाराममारता विचिंत्य सर्वलोकशास्त्रं प्रमाणमिति मनसि ज्ञात्वा सा० धणपालसुत सा० रत्नपाऊ ठ० गजमल्ल (सुत) ठ० विजयपाल श्रे० दल्हासुत श्रे० वील्हण मह० जिणदेव मह०श्रीकल्ह सुत ठ० आसपाऊ श्रे० सोल्हा ठ० सहजासुत ठ० अरसीह सा० राहडसुत सा० लाहडप्रभृतिसमस्तश्रावकैर्मोक्षफलप्रार्थकैः समस्त चतुर्विधसघस्य पठनार्थं वाचनार्थं च समर्पणाय लिखापित

## श्री शां० ज्ञान भं० खंभात.

श्रीसिद्धजयन्तं चरितम् ता. प्र. ८५

स्वस्ति श्रीविक्रमनरेंद्र संवत १२६१ वर्ष अश्विन वदि ७ रवौ पुष्य नक्षत्रे शुभयोगे श्री-मदणहिल्पाटके महाराजाधिराज श्रीभीमदेव कल्याणविजयराज्ये प्रवर्त्तमाने श्रीप्राग्वाटज्ञातीयश्रेष्ठि धवलसरपुत्र्या ठ० नाउ श्राविकया आत्मश्रेयोऽर्थं पंडितमुजालहस्तेन भृगुकच्छस्थाने जयतिहुयि पुस्तकं लम्बयित्वा श्रीअजितदेवसूरीणा निजभक्त्या समर्पितमिति ॥ शुभ भवतु ॥ मंगलमस्तु ॥ मगउ महाश्री ॥

## श्री शां० ज्ञान भं० खंभात.

श्रीउपदेशमालाविवरणम् ता. प्र. ८६

संवत् १३८३ वर्ष कार्तिक सुदि १३ शनौ अद्येह श्रीदेवगिरौ साधु रामसीह सुतसाधु सिहु(पण)सिंहेन श्रीमदुपदेशमालाप्रकरणवृत्तिपुस्तिका लिखापिता । यादृश ..मंगलमस्तु.

## श्री शां० ज्ञान भं० खंभात,

श्रीलिंगानुशासनम् ता प्र ८७

संवत् १२८७ वर्षे वैशाख सुदि गुरावद्येह बीजापुरीयश्रावकपौषधशालायां पूज्यश्री-देवेंद्रसूरिविजयचंद्रसूरि उपाध्याय श्रीदेवभद्रगणिसद्गुरूणा धर्मोपदेशात् सा० रत्नपाल सा० लाहड श्रे० वील्हण ठ० आसपाऊ सूत्रपुस्तिका लिखापिता

## श्री शां० ज्ञान भं० खंभात,

श्रीसिद्धांतोद्धारद्वितीयखंडः ता प्र ८८

प्रशस्तिः-संवत् १२१२ आषाढ वदि १२ गुरौ लिखितेयं सिद्धांतोद्धारपुस्तिका लेखक-देवप्रसादेनेति ॥ ग्रंथाग्र १६७० द्वितीयखंडे ॥

## श्री शां० ज्ञान भं० खंभात.

श्रीकल्पसूत्रम् ता. प्र. ८९

ओकेशवंशः प्रवरो विभाति सर्वेषु वंशेषु रमाप्रधानः ।
तस्मिन् सुगोत्रं प्रवरं प्रशस्यते नाम्ना महत्थाः जाहडाभिधानं ॥ २ ॥
क्षत्रियवंशः पूर्वं श्रीराष्ट्रकूटईतिनाम्ना । श्री जयचंद्रो राजा ॥

## श्री शां० ज्ञान भं० खंभात.

श्रीकल्पसूत्रम् ता. प्र. ९०

संवत् १२४७ वर्षे आपाढ सुदि ९ बुधेऽद्येह श्री भृगुकच्छे समस्तराजावलीविराजित-महाराजधिराज–उमापतिवरलब्धप्रसाद जंगमजनार्दनप्रतापचतुर्भुज श्रीमद्भीमदेवकल्याणविजय-राज्ये एतत्प्रसादावाप्तश्रीलाटदेशे निरूपितदंड श्रीशोभनदेवे अस्य निरूपणया मुद्राव्यापारे रत्नसिंहप्रतिपत्तौ इह श्रीभृगुकच्छे श्रीमदाचार्यविजयसिंहसूरिपट्टोद्धारणश्रीमज्जिनशासनसमुच्चय-आदेशनामृतपयःप्रपापालक आबाधजनपथिकाज्ञानश्रमपीलित ( ? ) कर्णपुटपेयपरममोक्षास्पद-विश्रामश्रीमदाचार्यश्रीपद्मदेवसूरिशिष्याणां हेतोः परमार्थमंडपपर्यूपणाकल्पं पं० साजणेन लिखितेति ॥ मंगलं । महाश्रीः ॥ ग्रं. २२०० ॥

## श्री शां० ज्ञान भं० खंभात.

श्रीकर्मग्रंथः सवृत्तिः ता. प्र. ९१

संवत् १४४७ वर्षे भट्टारक देवसुंदरसूर्युपदेशेन कर्मग्रंथवृत्तिपुस्तकं लेखयामास ॥

## श्री शां० ज्ञान भं० खंभात.

श्रीनिर्भयभीमनामा व्यायोगः ता. प्र. ९२

यादृशं पुस्तके दृष्टं तादृशं लिखितं मया ।
यदि शुद्धमशुद्धं वा मम दोखो[ षो ] न दीयते ॥

सं. १३०६ वर्षे भाद्रवा वदि ६ रवावद्येह श्रीमहाराजकुलश्रीउदयसिंहदेवकल्याणवि-जयराज्ये निर्भयभीमनामा व्यायोगो लिखित इति शुभं भवतु.

## श्री शां० ज्ञान भं० खंभात.

त्रिषष्टीयचरित्रेदशमंपर्वः ता. प्र. ९३

प्रशस्तिः ॥ संवत् १३२४ वर्षे मार्ग वदि १३ रवावद्येह श्री मदुज्जय[यि] न्यां श्री-महावीरचरितपुस्तकं सा. देवसिंहेन मातुः श्रेयोऽर्थं लिखापितम् ॥

## - श्री शां० ज्ञान भं० खंभात.

श्रीमत्प्रज्ञापना वृत्तिः ता. प्र. ९४

इति श्रीमलयगिरिविरचितायां प्रज्ञापनाटीकायां षट्त्रिंशत्तम पद समर्थितं ॥ समर्थिता प्रज्ञापना टीका ॥ शुभ भवतु समस्तसघस्य ॥ मगल महाश्री ॥ सवत् १३८७ वर्षे वैशाष वदि १५ गुरौ श्री स्थभतीर्थे प्रज्ञापनाटीकापुस्तक लिखित ॥

## श्री संघवी पाडा जैन ज्ञान भंडार पाटण.

श्रीकल्पसूत्रम् ता प्र ९५

पृथक् (?) ५ पक्ष २ यक्षादि १३ श्रेष्ठि प्रद्युम्न कथा व्यधात् ॥
प्रार्थितो मोढगुरुणा श्रीहरिभद्रसूरिणा ॥ ७४ ॥
कालिकसूरिकथा समाप्ता ॥ छ ॥ छ ॥ शुभ भवतु ॥
॥ ए० ॥ श्रियो गृहे थोपपुरीयगच्छे सूरि प्रभाणद इति प्रकृष्ट ।
बभूव पूर्व्वं गुणरत्नखानि सुचारुचारित्रपवित्रगात्र ॥ १ ॥
विजयचद्रगुरु प्रवरो गुणी श्रुतमहोदधिरस्य पदेऽभवत् ।
अखिलधर्म्मसुकर्म्मविधायको गुरुरिव प्रतिभाति विचक्षण ॥ २ ॥
त पट्टपूर्वाचलमौलिभानुर्दुर्वारमारारिपुशातनपडितो य ॥
श्रीभावदेव प्रबभूव सूरि पदे तदीये श्रुतशीलयुक्त ॥ ३ ॥
ततो जराभीरुजयी समस्ति जयप्रभ सूरिवरोऽस्य पट्टे ।
अर्क प्रतापेन च चद्रमाऽसौ कलाकलापेन बुधस्तु बुद्ध्या ॥ ४ ॥
गुडाद्रेडपुरेऽप्यस्ति श्रीमान् पार्श्वजिनेश्वर ।
तस्य गोष्ठीपदे ख्यातो वश एष प्रकीर्त्यते ॥ १ ॥
प्राग्वाटवशे सुमनावतसे विख्यातनामाऽजनि चारुपल ॥
तद्गेहिनी जासलदेवी नाम्नी तत्कुक्षिजातोस्तनयावयोऽमी ॥ २ ॥
सर्वलक्षणसपूर्णा सर्वधर्म्मसमन्विता । सहदेवश्च पेताकोऽल्पमाक सहोदरा ॥ ३ ॥
सहदेवस्य च पत्न्या नागलदेव्या सुतौ शुभौ जातौ । आमाह्वौ विख्यातो धर्म्मधुराभारवाहनदक्षौ ॥
आमास्य पत्नी जिनधर्म्मतत्परा रभा सुशीला सुगुणा सुवशजा ।
तत्कुक्षिजातास्तनयास्त्रयो वरा धर्म्मार्थकामा इव जगमा सुवि ॥ ५ ॥
गुहुणा पूनाकेन च हरदेव समन्वितेन पुण्यवतौ ।
भातु श्रियोऽर्थं प्रददौ कल्पस्य पुस्तिका गुरवे ॥ ६ ॥

# श्री सं. पा. जै. ज्ञान भंडार पाटण

श्रीभगवतीसूत्रवृत्तिः ता. प्र. १६

( श्रीद्वादशांगहिमरसा(वास)समुद्रतुल्याः । कल्याणपंकजविकाशनभानुभासः ।
अज्ञानदुस्तरसरसा(तमो)भरदीपिकाभा विश्वं पुनंस्तु भुविवीरजिनस्य वाचः ॥१॥
रात्रा फूरस्य वा सिंहा (:) श्रित—) सुकृतिमनःकंदरः स्थैर्य सारः ।
( प्रद(स्फू )र्जकीर्तिचूलो विनय (नय) शमास्त ( तुल्य ) रत्नाभिरामः ।
( दानाद्यैः शुद्धधर्मैः प्रवरवनवृतः श्रीसमिद्धः पृथिव्यामस्ति प्राग्वाट-
वंशस्त्रिदशगिरिरिवानेकसत्कृत्यशृंगः ॥ २ ॥
( योऽचीकरन्मंडपनाम तुरम्य (पुर्यां) वल्लीभिधाराहपि (लक्ष्मीभिराराययि) तुं सुकर्म्मा ॥
ग्रामे च **संडेरक**नाम्नि वीरचित्तो चैत्ये (जनश्रेष्ठतमः) जनि श्रेष्ठी **सामा** (समा) खू ॥३॥
**मोहिनी** नाम तत्पत्नी, च मकार ( करी तयोः )
यशो नागो धर्मधुर्यः वाग्धनः शुद्धदर्शनः ॥ ४ ॥
**मल्हादनो जाल्हण**श्च; गुणिनोऽमी तनूद्भवाः ।
**वाग्धनस्य** गृहिण्यासीत्, **सीता** सम्यक्त्वशीलभाक् ॥ ५ ॥
तत्कुक्षिभूरभूत्पुत्रश्चो**डसिंहो** विशुद्धधीः ।
सद्धर्मकर्म्मनिरतो, विजयी पूज्यपूजकः ॥ ६ ॥
पंच पुत्र्योऽभवन् **खेत्ती मूंजाला रत्नदे**व्यथ । मयणीली...(तथा) सर्धा मंगला धर्मकर्मभिः ॥७॥
इतश्च—**वीजा**भिधोऽभवन्मंत्री, **खेत्ती** नाम्नी तत्प्रिया ।
तत्पुत्री **गोगठ**वित्ती, पुण्यकर्मसु सोद्यमा ॥ ८ ॥
( तामूढवाश्चो**डसिंह**स्तत्तनूजा गुणोज्ज्वलाः ।
आद्यः **पृथीभटो** धीमान्, **रत्नसिंहो** द्वितीयकः ॥ ९ ॥
वदान्याम**रसिंह**श्च तुर्यो **मल्ल**स्सुविक्रमी । विवेकी **विक्रमसिंह**हऽशु....जीयः ॥ १० ॥
**मूजाल**श्चेत्यमीषां तु, कल्पः यो (कनीयांस्तु) कृतोद्यमः ।
सुसाखो (श्च) रतो धर्मे, पत्न्यश्चेषां क्रमादिमाः....
**सूहवदेवी सुहागदे**व्यपरा निपुणा **नयणदेवी प्रतापदे**व्य ( धीमता ) ॥ १२ ॥
**भादल चांपलदेवी** पुरवाचाल्य रायणा ।
असौ च पुत्राः पुत्र्यश्चाभूवन् भाग्यभरांविताः ॥ १३ ॥
श्रेष्टि....**पोधनस्य**....वृद्धि मुपेयुषि । श्री**रत्नसिंह सूरीणां** पार्श्वे शुश्राव देशनां ॥ १४ ॥
**पेथड** प्रवराचारः प्रयुक्तः....धुभिहा**नकस्य** सदाभक्तादि....धर्मगुणार्जने ॥ १५ ॥
दातं धनं स्योत्त समस्तिलोके....पुनस्तु कथितं जिनेंद्रैः तत्रापि सिद्धांत....॥१६॥

इत्याकर्ण्य सांगा . .भूंगावली तुन्यदेवमलीलिखद् भगवतीसूत्र सटीक मुदा ॥
श्रीसिद्धांतविचारसार- पेथड ॥ १७ ॥
वेदबाणहुताशेंदु (मिते) विक्रमवत्सरे (१३५४) ।
(सत्) पुस्तक (स्य) व्याख्यानं, कारयामास य पितु ॥ १८ ॥
तिर्य्यं-सौ युवराजतां सचिवतामारोप्य जीवे कवै ।
च्छायाश्मा मुताया पुरातन पद सन्लेखकत्वं बुधो राज्यतारक प्रकाशता ॥ १९ ॥

संवत १३५३ वर्षे अयेह बीजापुरे सोमतिलकसूरिभि श्रीभगवतिसूत्रपुस्तकं व्याख्यातं । वाचित. पं. हर्षकीर्तिगणिना शुभं भवतु ॥ श्रीसकलसंघस्य ॥

## श्री सं. पा. जै. ज्ञानभंडार पाटण

**श्रीसूक्तरत्नाकरः** ता. प्र. ९२

॥ र्द० ॥ सुपर्व सवलोत्तुग , शाखाशतसमावृत ॥
श्रीमान्श्रीमालवशोऽस्ति, सर्वत्रापि प्रमाणवत् ॥ १ ॥

श्रेष्ठी जयंत इत्यासीत्तत्र मुक्तामणे सम , पोती नाम्नी च तपनी, गेहलक्ष्मीरिवागिनी ॥३॥
श्रीसंघभक्तसधीरैया , सदासम्यक्त्वशालिन ॥ तत्पुत्रा. क्रमतोऽभूवन् गुरुभक्तिरतो धमी ॥४॥
विद्वान् महणनामाद्यो, मदनाख्यो महत्तम । सामंतो झांझणाख्यश्च, लाडणोऽनन्यवासन ॥५॥
वयज्जा तेजीच सुते सुदुस्तपतपोऽचिते । लाडणस्य तु रूलतादेवीति दयिताऽभवत् ॥६॥
तत्पुत्ता अरिसिंहाद्या, एव वरो विराजति । श्रीरत्नसिंहसुगुरोर्लाडणो धर्ममश्रृणोत् ॥७॥
तत स्वस्यैव पुण्यार्थी, सूक्तरत्नाकरस्य तु । चतस्र पुस्तिका पुण्या, लेखयामास लाडण. ॥८॥

मौक्तिर्मुक्तावतसी रमिरजनिकरस्फारताडंकपत्रा, ज्योत्स्नान्दूसांगरागा जलनिधिवसना स्वर्नदीहारयष्टि ॥ यावन्नर्नर्ति कीर्तिश्रमजिनपतेर्विश्वरंगेऽत्र तावत् , मद्व्याख्यानवादे कलयतु तुल्ना कंबुजे पुस्तकोऽयं ॥७॥ स.१३४७ वर्षे अषाढ वदि ९ गुरौ आशापल्यां महं वीरमेन श्रीसूक्तरत्नाकरपुस्तिका लिखिता ।कल्याणमस्तु ॥

## श्री सं. पा. जै. ज्ञानभंडार पाटण

**श्री उपमितिभवप्रपंचकथा** ता. प्र. ९३

॥र्द०॥ श्रीमतस्ते सता संतु तीर्थेशा । स्वस्तिकारणं ॥अपारभवकान्तारसमुत्तारितजंतवारित. . तव॥१॥
पल्लीवाल इति ख्यातो वश पर्वोदितोदित ॥
सोऽस्ति स्वस्तिकरो धात्र्या, यत्र कीर्तिध्वजायते॥ २ ॥

पु (पुत्रः प) वित्रोऽभाद्वंशे(तत्र)मुक्तोफलोज्ज्वलः । वीकलाख्य इति श्रेष्ठी सतां हृदि गुणैः स्थितः॥३॥

तत्पत्नी रत्नदेवाति, पवित्रा पुण्यशालिनी । गुणमाणिक्यमंजूषा तुषारद्युतिशीतला ॥ ४ ॥

पुत्री त्रयोः सूल्हणिनामधेया, सुश्राविका शीलमती बभूव ।
या देवपूजानिरता गुरूणां, पादांबुजासेवनराजहंसी ॥ ५ ॥

पुरा पवित्रस्तत्रासीद्वंशे मुक्ताफलोज्ज्वलः ।
योगदेव (इति)....श्रेष्ठी सतां हृदि गुणैः स्थितः ॥ ६ ॥

आम्रदेवश्च वीरश्च तनयौ समयौ ततः ।
कर्पधामाकसाढाकाः, वीरपुत्रास्त्रयोऽभवन् ॥ ७ ॥

साढाकस्य ततो जज्ञे, पुत्रश्चांद्रकुमारकः ।
परोपकारदाक्षिण्यगांभीर्यविधिसेवरूधिः ॥ ८ ॥

जयतीत्याख्यया जज्ञे, गेहिनी तस्य(भूः)सत्य....तत्सुतः पासडो जज्ञे, धांइरूपी सुते तथा ॥९॥

ततः सत्पुण्यपात्रस्य, पवित्रस्य महात्मनः । पासडस्याभवत्पत्नीऽपातूरिति (पवित्रवाक्)॥ १० ॥

तस्याः पुत्रास्त्रयो जाताः, पुमर्था इव जंगमाः । जगत्सिंहो वज्रसिंहः, तथा मघनसिंहकः ॥११॥

माल्हणिर्जगत्सिंहस्य। भवत् सद्धर्मचारिणी । सुल्हणिर्वज्रसिंहस्य, बभूव प्रेयसी ततः ॥ १२ ॥

श्रीपूर्व्योदयचंद्राणां पदस्योद्योतकारिणां। श्रीदेवसूरीणामुपदेशेन भक्तिभाक् ॥ १३ ॥

सूल्हणिश्राविका सेयं, कुर्वाणा धर्मसंग्रहं । श्रीजयदेवसूरीणां, विशेषाद्भक्तिशालिनी ॥ १४ ॥

(उपमितिभवप्रपंच)–स्योद्धारस्यात्र पुस्तिकामेतां । साक्षात् स्वश्वश्रूणां श्रेयोऽर्थं लेखयामास ॥१५॥

यावद्....तावद् ॥ शुभमस्तु श्रीश्रमणसंघस्य ॥ मंगलं महाश्रीरिति ॥

## श्री सं. पा. जै. ज्ञानभंडार पाटण

श्रीपच्चक्खाणसरूत्रवम् ता. प्र. ९४

संवत् १३४३ वर्षे अश्विन वदि ४ भोमे ॥
श्रीपत्तनाख्ये नगरे गरिष्टे, वर्षेऽग्निवार्ध्यंबुधिचंद्रसंख्ये (१४४३)
एतन्महाशास्त्रमनुद्धतोऽयं, लिलेख दक्षो द्विजनागशर्मा ॥ १ ॥

प्राग्वाटवंशे प्रवरे पृथिव्यां देदावरः........... ।
वसाभिधानश्च तदंगजन्मा, तस्यापि पोपेत्यभिधस्तनूजः ॥ १ ॥

तस्य च तेजलदेवी जाया पुत्रश्च मलयसिंहाख्यः ।
यो देवगुरुपु भक्तो गेरंडकनगरमुख्यतमः ॥ २ ॥

तस्य च भार्या साकुर्धर्मासक्ता सुशीलसंयुक्ता ।

तस्याथ पच तनया जूलिलसारगजयतसिंहाख्या ।
सहिताश्च पेतसिंहाभिधमेघाभ्यां च सुगुणाभ्यां ॥ ४ ॥
पुत्र्यस्तथा चदेकू सारुधरणूछभूश्च पांचूश्च ।
रुडीमातूनाम्नी सप्तैता (?) सुशीलगुणयुक्ता ॥ ५ ॥
श्रीमत्तपागणाधिपसूरिश्रीदेवसुंदरगुरूणां ।
उपदेशतोऽथ सम्यग् धर्माधर्मौ परिज्ञाय ॥ ६ ॥
साकू सुश्राविका सौवपुनपुत्रीपरिवृता ।
पितृर्मेल्पमिहस्य, श्रेयसे शुद्धवासना ॥ ७ ॥
ज्योति.करण्डवृत्ति तीर्थकल्पाथ सूरिशा ।
चैत्यवदनचूर्ण्यादि, श्रीताडपुस्तकत्रयाम् ॥ ८ ॥
पत्तनेऽणहिल्लाने(पाटणमे),वार्धिवार्ध्यब्धिभूमिते १४४४। वत्सरे लेखयामास नागशर्म्मद्विजन्मा ॥९॥
एषा सवधिना मोपाभिधश्राद्धेन धीमता ।
पातीदेदीतनूजेन लेखितेय सुपुस्तिका, ॥ १० ॥ छ ॥ छ ॥ श्री ॥ छ ॥

**श्री सं. पा. जै. ज्ञान भंडार, पाटण.**

**श्रीचंद्रप्रज्ञप्तिवृत्ति**  ता. प्र १५

ग्रंथाग्रंथ ९५०० ॥ एव सवत् १४ आषाढादि ८१ वर्षे भाद्रपद वदि १ शनौ ॥ॐ नम ॥
श्रीश्रीमालकुले तेजामत्री वानूश्च तत्प्रिया ॥ आसस्तत्तनया मेलामेघासेमाह्वयास्त्रय ॥ १ ॥
तेषा डाहीधर्मिणीकाऊनाम्न्य क्रमाद्दिमा प त्य ।
मेलापुत्रगोरासाइआरामदेवघागाख्या ॥ २ ॥
इतश्च मेघादयिता धर्मिणी धर्मसत्कथा ॥ घोघानगरवास्त व्यमत्रिसिंघातनूद्भवा ॥ ३ ॥
फडुआर्यांगावधुप्रभृतिकुटुबान्विता सुधर्मरता । श्रीमज्जैनेंद्रागमभक्तिभरोल्लसितचेतस्का ॥ ४ ॥
तपाधिपश्रीगुरुसोमसुंदरोपदेशनस्त्र्यष्टद्वियुगेंदु १४८३ वत्सरे ।
अलीलिखत् स्वस्य हिताय चद्रप्रज्ञप्तिवृत्ति वरताडपुस्तके ॥ ५ ॥

**श्री सं. पा. जै. ज्ञानभंडार पाटण**

**श्रीआवश्यकलघुवृत्तिः**  ता. प्र. १६

अणहिल्लपुरमस्ति स्वस्तिकप्रायमुर्व्यां, नयविनयविवेकच्छेकलोकावरुद्धं ।
अपरनगरशोभागर्वसर्वस्वजैत्र, वरजिनगृहमाग्रसु(म)विमानोपहासि ॥ १ ॥

श्रीश्रीपालकुलस्तत्र रावाख्यः श्रेष्ठिनोऽभवत् ।
नानादानादिसद्धर्मकर्म्मकर्म्मठमानसः ॥ २ ॥
तस्य राजलदेवीति जायाऽजायत सद्गुणा ।
विवेकविनयप्रज्ञाशीलालंकारधारिणी ॥ ३ ॥
सांडा सोमा मेघा भूपति पांचाह्वयास्तयोः पंच ।
पुत्राः सुतीर्थयात्राद्यवाप्तसंघाधिपत्यपदाः ॥ ४ ॥
नामस्तवपञ्चशतीकार्योत्सर्गैकतत्परः सततम् ।
सांडाख्यः संघपति र्विशिष्य तेष्वद्भुतक्रियो जज्ञे ॥ ५ ॥
तेषां सांडादीनां पंचानामपि पंच पत्न्योऽमूः । कामलदेवी सिंगारदेवी माणिक्यदेवी च ॥ ६ ॥
भावलदेवी पाल्हणदेवी ख्याताः सुशीलतः क्रमतः ।
श्रीदेवगुरुषु भक्ताः सक्ताः सद्धर्मकर्मविधौ ॥ ७ ॥ युग्मम् ॥
सांडाकामलदेव्याः तनयाः पञ्चाभवन् क्रमादेते ।
श्रीधर्म्मकर्म्मकुशलाः सम्यक्त्वाद्यैर्गुणैः प्रथिताः ॥ ८ ॥
मनाख्यः प्रथमस्तेषां धर्म्मणः कर्म्मणस्तथा ।
डाहाख्यश्च चतुर्थोऽस्ति, योधाख्यः पंचमः पुनः ॥ ९ ॥
पुत्र्यौ तदा द्वौ गुणराजिराजिते, पूरीति वाछूरिति विश्रुताऽखिले ।
यन्मानसं श्रीगुरुदेवभक्तियुक्, श्रीधर्मपीयूषरसेनपूरितम् ॥ १० ॥
दयिताः क्रमतस्तेषां विमलान्वयविमलशीलसंपन्नाः
रतनूकांकु–मांइ–गांकू–वाल्हीति–नामानः ॥ ११ ॥
मनाकस्य समधरः सालिगश्च सुतावुभौ ।
धर्मणस्य संघपतेर्हवालाभिधौ पुनः ॥ १२ ॥
डाहाकस्य मांइ आधा, हंसा योधा गजस्तथा ।
सर्वेऽप्यमीगुणमणिश्रेणिरोहणभूधराः ॥ १३ ॥
नानाविधान् धर्म्मविधीन् सृजन् सदा, विशुद्धधीः संघपतिः सुकर्म्मणः ।
श्रीज्ञानभक्तिं विशदां हृदादधद्, द्रव्यव्ययेन प्रचुरेण हर्षतः ॥ १४ ॥
श्रेष्ठिसाल्हाकसिंगारदेवीपुत्र्या पवित्रया ।
मांइ नाम्न्याऽनिशं शुद्धक्रियया प्रिययान्वितः ॥ १५ ॥
श्रीसोमसुंदरगुरुप्रवरोपदेशात्, स्वश्रेयसेद्विनववार्द्धि शशांकवर्षे (१४९२)
आवश्यकस्य लघुवृत्तिमलेखयत् श्रीताडीयपुस्तकवरे दृढधर्म्मभावः॥१६॥
श्रीसोमसुंदरसूरिगुरवो जयंतु ॥

## श्री सं. पा. जै. ज्ञानभंडार पाटण

**श्रीसम्मतितर्कवृत्तिः** ता० प्र० ९७

संवत् १४४६ वर्षे फागुण शुदि १४ सोमे भट्टारकश्रीसोमतिलकसूरिगुरूणा भंडारे मह० ठाकुरसीहेनालेखि ॥

प्राग्वाट ज्ञातीय सा० पोपा सुत सा० महण भार्या स० गानी पुत्र्या विहितश्रीयात्रादि बहुपुण्यकृत्य स० हरिचंद पित्र सा० पारस भगिन्या चील्‌ श्राविकया भट्टारकप्रभुश्रीदेवसुंदर सूरिगुरूणामुपदेशेन अभयचूलाप्रवर्तिनीपदस्थापनाश्रीतीर्थयात्रार्थं समागतस हरिचंदेन सह भ्रातया श्रीस्तंभतीर्थे सं० १४४७ वर्ष समतिपुस्तक लेखितमिति, भद्रं श्रीसंघाय ॥

## श्री सं. पा. जै. ज्ञानभंडार पाटण

**श्रीपद्मचरित्रम् ( प्राकृत )** ता० प्र० ९८

इति श्रीपद्मचरित्रं समाप्तमिति ॥ ग्रंथाग्र १०५०० ॥ संवत् १४५८ वर्षे प्रथम भाद्रपद शुदि ८ अष्टम्या रवौ श्रीपत्तने पद्मचरित्रं लिखितं ॥ शिवमस्तु ॥

प्राग्वाटज्ञातीय श्रेष्ठी वीराभिध सुव्रतनिष्ठ ।
कीर्तिप्रथाप्रथित शिष्टप्रष्ठोऽजनि गरिष्ठ ॥ १ ॥

प्रभूतपुण्यार्जनसावधानस्तस्यांगजोऽभूद् वयजाभिधान ।
गुणै (य) सेकैरिह निस्समान , परोपकारप्रथनैकतान ॥ २ ॥

माऊसंज्ञा तस्य भार्या विधिज्ञानद्दे धन्याऽगण्यपुण्यप्रवीणा ।
कीर्तिस्फीता सर्वदोदारचित्ता रेखा प्राप्ता स्त्रीषु शीलोत्तमासु ॥ ३ ॥

चत्वार एते तनयास्तदीया, जाता धनाया सुकृतावदाता ।
तेजाभिधो भद्रकभीमसिंह:, सपूर्णसिंहो भुवि पद्मसिंह ॥ ४ ॥

सुता तथा रूपलनामधेया, गुणैरमेया शुभभागधेया ।
यस्या पितृव्या ननु चंद्रेण (अनूचानचन्द्रा ) श्रीमज्जयानंदमुनींद्रचंद्रा ॥५॥

आबाल्यकालादपि पुण्यकार्यमेकैकाना करुणार्द्रचित्ता ।
देवे गुरौ भक्तिमती सतो दा (दैन)सदा तप कर्मणि कर्मठा या ॥ ६ ॥

श्रीमत्तपागणनभोऽङ्गणभानुकल्पश्रीदेवसुंदरगुरुप्रवरोपदेशात् ।
नंदेषुवारिधिशशांक (१४५९) मिते प्रतीते, संवत्सर वहति विक्रमभूपतीये ॥ ७ ॥

## श्री सं, पा, जै, ज्ञानभंडार पाटण

श्रीपंचाशकवृत्तिः ता. प्र. १०२

संवत् १४४२ वर्षे भाद्रपद सुदि २ सोमे लिखितमिदं पुस्तकं, श्री स्तंभतीर्थनगरे लिखित ॥छ॥

॥ पं० ॥ आभू श्रेष्ठी पल्लीवाल्कुले तत्सुतश्च वीराकः ।
तस्य सुतौ विदितौ जगति महणसिंहाख्यवीजाख्यौ ॥ १ ॥
वीजाकस्य श्रीरिति समजनि भार्या सुतात्रयस्तस्य,
ज्येष्ठ कुमारपालो द्वावनुजौ भीममदनाख्यौ ॥ २ ॥
आद्यस्य जाया महणदेव्यामगमजात्रय (सु)राणिगोवाइराभि-
स्तस्यप्तनाक (सल्पाकश्च)मे तिनामत ॥ ३ ॥
ते(पु) राणिगपुत्रस्य, श्रांझणस्यतनूद्भवा ।
सलपाविजपालाख्यनिरयाजेसलसज्ञिता ॥ ४ ॥
सलपकस्यास्ति खीमसिंहसज्ञस्तनूरुह ।
विजपालस्य पुत्रौ द्वौ, जयसिंहो गुणैकभू ॥ ५ ॥
नरसिंहश्च नरियास्तस्य श्लाघ्य गुणावुनि ।
भार्याया नागलदेव्या, जाता संति सुतात्रय ॥ ६ ॥
ते चैते लखमसिंहो, रामसिंहश्च गोपाल ।
सत्क्रियोदार्ययात्राद्यै कृत्यैर्ये सज्जनोत्तमाः ॥ ७ ॥
वशमौक्तो भीमस्याजनि कर्पूरदेवीनाभार्या ।
मदनस्य सरस्वया देपालाख्यो बभूव सुत ॥ ८ ॥
तस्याथ धर्मजजन्मालिसीम्नो, भीमस्य निस्सीमगुणाम्बुराशे ।
पुत्रा पवित्राचरितैकपात्र, चत्वार आसन् विशदावदाता ॥ ९ ॥
तेषामाद्य पद्मनामा यदीयो, धीधाख्योऽभूत्सुनुरन्यूनबुद्धिः ॥
धीरेयो यो देवगुर्वादिकार्येष्वानाह्वानस्तस्य पुत्रोऽधुनाऽस्ति ॥ १० ॥
द्वितीय साढणो यस्य, पौत्रोऽस्ति कडुयाभिध ।
तृतीयस्तनयो जज्ञे, समेत संमत सता ॥ ११ ॥
तुर्योऽथ सौवर्णिक (वर्ग) वर्ण्यधूराभिध सुधापेय (शुद्ध)लसच्चरित्र ।
तस्य प्रिया सुहवदेविनाम्नी, तयोरभूता च सुतौ गुणाढ्यौ ॥ १२ ॥

प्रथमोऽत्र प्रथमसिंहः पाल्हणसिंहो द्वितीयकः सूनुः।
तस्य च पाल्हणदेव्यां लींबाआंबाभिधौ तनयौ ॥ १३ ॥
अथ प्रथमसिंहस्य सौवर्णिकशिरोमणेः ।
प्रिया भीमलदेवीति, पुण्यप्रेमपराऽजनि ॥ १४ ॥
तयोश्च तनयाः पंच सदाचारधुरंधराः ।
स्वावदातशतैर्भूमौ, सुस्थिरीकृतकीर्त्तयः ॥ १५ ॥
सोमा-रतन-सिंहाक-साल्हा-डुंगर-संज्ञिताः ।
तेषु सोमाभिधानस्य, सौम्यत्वादिगुणांबुधेः ॥ १६ ॥
भार्यायां साजणदेव्यां, चत्वारः संति तनयाः
सद्गुणा नासण-वाला-गोधा-राघव संज्ञिताः ॥ १७ ॥
रत्नो द्वितीयोऽजनि सिंहयुक्तो दानांबुशीतीकृतभूरिलोकः ।
संघाधिपत्वं विमलाचलादिश्रीतीर्थयात्राकरणादवाप ॥ १८ ॥
(तत्) प्रियायां रत्नदेव्यामस्य पुत्रा गुणात्रयः ।
धनः सायरनामा च सहदेवस्तृतीयकः ॥ १९ ॥
तृतीयकस्तस्य सुतोऽस्ति सिंहाभिधः सुधीरो नृपमानपात्रं,
गुणाःप्रभूताः प्रतिभाप्रभाद्या व्यधुस्तरां यत्र दृढानुबंधं ॥ २० ॥
श्रीमद्जयानंदगुरुसूरिश्रीदेवसुन्दरगुरूणां ।
सूरिपदमहश्चक्रे येन महान् खद्विभुवनाब्दे (१४२०) ॥ २१ ॥
तस्य च सहचारिण्यः पुण्याचरणैकमानसास्तिमस्रः (?) ।
सोपलदेवी दूल्हादेवी पूजीति विख्याताः ॥ २२ ॥
अंत्यभार्या द्वयोत्पन्नौ तस्य द्वावंगसंभवौ ।
आद्य आसधरो नाम नागराजाद्योहयोऽनुजः ॥ २३ ॥
तुर्योऽथ साल्हाभिध आत्मबंधुर्भक्तिस्वभावार्जवधैर्यभूमिः ।
तस्य प्रिया पुण्यपराऽस्ति हीरादेवी तयोः सप्त सुताश्च संति ॥ २४ ॥
इह देवराज-शिवराज-हेमराजश्च खीमराजश्च ।
भोजाख्यो गुणराजो वनराजश्चेति गुणभाजः ॥ २५ ॥
इतश्च—सर्वे कुटुम्बाधिपतेः सिंहस्यादेशतस्तमालिन्यां,
स्तंभनकाधिपचैत्ये भूचतुरुदधींदुसंख्येऽब्दे (१४४१) ॥ २६ ॥
धनाकसहदेवाभ्यां चक्रे सूरिपदोत्सवः ।
श्रीज्ञानसागराख्यानां सूरीणां हर्षितावनिः ॥ २७ ॥

तथा सौवर्णिकश्रेष्ठश्रकु सूरिपन्तेस्य ।
महर्घ्या स्समसिंहो रायसिंहश्च गोवाल ॥ २८ ॥
द्विवार्धियुगमूर्वर्षे (१४४२) प्रीणिताशेषभूतल ।
श्रीकुलमहना सूरिश्रीगुणरत्नसञ्ज्ञिना ॥ २९ ॥ युग्मं ॥
अत्र साल्हा कुटुम्बस्य प्रस्तुते नामवर्णने ।
तस्य स्वजननामापि किंचिन्नामायलिख्यत ॥ ३० ॥
सौवर्णिकोत्तसस्यास्य, साल्हाभार्या विशुद्धधी ।
शल्यादिभिर्गुणै ख्याता हीरादेवीति सञ्ज्ञिता ॥ ३१ ॥
सौवर्णिकशिरोरत्नलूढा लापणदेविचा ।
शत्रुञ्जयादियात्राभि पुण्योपार्जनसादरा ॥ ३२ ॥
श्री सोमतिलकसूरिश्वर ॥

## श्री. सं, पा, जै, ज्ञा, भं, पाटण

श्रीपद्मप्रभस्वामिचरित्रम् ता प्र. १०४

तम्मयपट्टट्ठिएहिं कईहिं सिरिदेवसूरिनामेहिं,
पउमप्पहसपहुणो चरिय रइय कयच्छरिय ॥ ४२ ॥
वेयसरसुरपरिमिय (१२५४) वरिसे निवविक्कमरस वरिसाउ ।
मग्गसिर सुदद्स मीतिहीय वारमि तह रविणो ॥ ४३ ॥
रेवइनक्खत्तगए हिमकिरणावरि (विरिय) भीमभीमस्स ।
चोल्लक्कवसमणिणो, निरवज्जेरज्जमयमि ॥ ४४ ॥
सिरि वद्धमाणनयरे ठिएण प जुन्नसिट्ठिवसहीए ।
सिरिपउमप्पहचरिय, पडिपुन्नमिम मए विहिय ॥ ४५ ॥
सवत् १४७९ वर्षे वैशाप वदि ४ गुरौ इष्टदेवताभ्यो नम ॥ छ ॥ छ ॥
॥ ९० ॥ ॐ नम श्रीमज्जिनवरविहारनिरान्तमान सद्धर्मकर्मठजनव्रजलभ्यमान ।
सौवश्रिया प्रतिहतामपुराभिमान ख्यात इडाद्रनगर जयति प्रधान ॥ १ ॥
तत्रोत्तर्यन्तिपदगानि गिरिग्रामप्रतिष्ठे शुभच्छा(स्या)ये पर्वन्त(तैरन)स्तविमत्रे प्राग्वाटवशे ध्रुवा
लापाहृव प्रवभूव मौक्तिकमणि सद्वृत्तभाव श्रित
ग्रामान् सज्जनमन्न शुचिरुचिर्ग्रासादिदोषोज्झित ॥ २ ॥
तमो दिजेतु पुरुषोत्तमस्य सुदर्शनश्रीकलितस्य तस्य ।
पद्मासना भोगविलासदक्षा प्रिया गुणाढ्याऽजनि लक्ष्मीदेवी ॥ ३ ॥

तत्तन्निर्म्मलधर्म्मकर्म्मनिरतो धर्म्माभिधानस्तयोः
संजातस्तनयः प्रशस्यविनयः श्रीमान्निरस्ताऽनयः ।
आश्चर्यं प्रतिपद्यपि प्रतिकलं साकल्यनर्म्मल्यभाक्
यस्य स्पष्टमदीप्यतामृतरुचिर्निश्शेषलुंपत्तमाः (रूपोत्तमो) ॥ ४ ॥
षष्ठाष्टमादिकविचित्रतपोविधानव्यावर्णनाऽस्य ननु पुष्यति कामभिख्यां ।
संसारसागरतरंडमखंडभावः संसारतारणकृतं कृतवान् कृती यः ॥ ५ ॥
श्रीमान् वयस्थो दयितान्वितोऽपि च ब्रह्मव्रतं वत्सरपंचविंशतिं ।
स एष यावत्कथिकं प्रपालयन्न विस्मयं कस्य मनस्यवीविशत् ॥ ६ ॥
श्रीशक्रस्तवपंचकादिविधिना वारांश्चतुर्विंशतिं
तन्वानो जिनवंदनं प्रतिदिनं यावद्भवाभिग्रहात् ।
सम्यक्त्वय सुधीः शतत्रयमितैर्यो राजतैष्टंककैः—
रंतर्मोदकगाहितैर्विहितवानुवापनं पुण्यवान् ॥ ७ ॥
इयं सतीचक्रशतक्रतूरतूरतुषनिस्तुषशीलभृत्प्रिया ।
गुणा यदीया हृदयंगमाः सतां श्रयंत्यजस्रं श्रवणावतंसतां ॥ ८ ॥
इतश्च-श्रीमत्तपागणनभांगणभास्कराणां सिद्धांतवारिधिविगाहनमंदराणाम् ।
श्रीदेवसुंदरगुरूत्तमपादभाजां श्रीसोमसुंदरमुनीश्वरसूरिराजाम् ॥ ९ ॥
पीयूषदेश्यामुपदेशभारतीं निशम्य सम्यक् श्रुतभक्तिभावितः ।
ग्रंथं स लक्षद्वयमानमात्मनः पुण्याय धन्यः स्वधनेन लेखयन् ॥ १०॥
सोमवसुमनु ( १४८१ ) मितेब्दे श्री चित्कोशे
व्यलीलिखन्मोदात् । (श्री प्रभप्रभुचरितं पठनायेदं श्रमणसंघे).... त्रिभिर्विशेषकं ॥
यावद्व्योमातपत्रे ग्रहमणिखचिते मेरुसौवर्णदंडे
श्रीधर्म्मस्याधिभर्तुर्भ्रमति व्ररनभोरत्ननीराजनेयं ॥
तावत्तत्वार्थसार्थामृतरसजलधिर्नंदतात् स्वस्तिशाली,
ग्रंथोऽयं वाच्यमानः सहृदयहृदयानंदकंदांबुदश्रीः ॥ १२ ॥
छ ॥ शुभं भवतु ॥ छ ॥

## श्री सं. पा. जै. ज्ञान. भं० पाटण.

**श्रीधर्मसंग्रहणीवृत्तिः** ता. प्र. १०५

संवत् १४३७ वर्षे आश्विनवदिप्रतिपदातिथौ शनिवारे धर्मसंग्रहणीनामग्रंथस्य पुस्तकं लिखापितमस्ति ॥

जैनत्वाव्यभिचारिभावसुभगाः सर्वेऽपियस्मिञ्जना
स्तस्मिन् धर्मयशःसमृद्धिविशदे वंशेऽवकेशाह्वये

श्राद्धोऽभूत् नरसिंह इत्यभिधया साधुः प्रसिद्ध सुधा
स्तस्य प्रौढगुणा बभूव नयणादेवीति विद्या प्रिया ॥१॥

तयोरभूवंस्तनयास्त्रयोऽमी भूजाल–माला–महिपाल–संज्ञा ।
मालाभिधस्तेषु विशेषधर्म्मा सर्वाङ्गसंदोहकमोहगर्वैः ॥२॥

पुण्याय पाणिग्रहणे निषेधी धीरं सुशीलोत्तमगेहमेधी ।
जिनेश्वरार्चादिविशिष्टनित्यानुष्ठाननिष्ठ सुकृतालिपुष्ट ॥३॥

साधुश्चोर्भेमिस्तले सुविपुले चान्द्रे कुले श्रीतपा–
गच्छव्योमविभूषण वितमसस्तेजस्वितार्केंदुवत् ।
श्रीगच्छाधिपपूज्यसद्गुरुजयानंदाह्वयाः (भिधा) सूरयः
श्रीमतो गुरुदेवसुंदरइति ख्यातास्त्र सूरीश्वरा ॥४॥

तेषां गुरूणा उपदेशयोगात्रान सदानंदरमानिदान ।
विज्ञाय विज्ञो यनुते समक्षेत्र्या न्यार्योपार्जिताऽऽमविर्त्त ॥५॥

शास्त्रलेखनमिहापि हि सारं ज्ञानसत्रसदृशं यत एतत् ।
इत्यवेत्य विशदाशयवृत्तिर्धर्मसमहिणिवृत्तिमिर्मां स ॥६॥

साधुमल्ल इह लेखयति स्म स्तभतीर्थनगरे गरिमाढ्ये ।
भूपराग्निनलघीन्दुमिताके(१४३७)त्सरेऽश्वयुजि निर्मलपक्षे ॥७॥

नंदतु तावत् ।

## श्री सं० पा. जै. ज्ञान, भं० पाटण.

श्रीरायपसेणीसूत्रम् प्र. १०१

ग्रथाग्रं ३६५० ॥ छ ॥ शुभं भवतु ॥ छ ॥ संवत् १४७४ वर्षे मार्ग शुदि ६ रवौ ॥
लिखितं विप्रेण नागशर्मणा श्रीमदणहिल्लपत्तने ॥ छ ॥ शिवमस्तु सर्वजगत ॥

प्रतिमितेत्ति कौर्तिवर सत्यतिनिष्ठ

प्रथमो नरपालाख्यो धनसिंहो द्वितीयक । सार्थीयकस्तु पोनाख्य मनो सद्भातरस्त्रयः ॥२॥

स्वभ्रमीसवह्नाम्नी धर्मी धर्मपरायणा ।
सत्नोमतान्नि सौम्या इन्दिराशन्ताशालिका ॥३॥

श्रवत् समयोर्वेद्दे तायो द्वितीयोऽव
जाग श्रीमद्धर्ममयधर्मोद्धृतपूर्वमपि ॥४॥

तस्य भार्या गुणैरार्या धर्म्मकर्म्मपरायणा ।
रत्नू नाम्नी शुद्धशीला विशुद्धहृदया सदा ॥ ५ ॥

तपसाऽजित....चूलाभाचंगसंवेगभूषणं
तेपोऽतिदुस्तपं पापंकदूषणशोषणं ॥

चिराज्याप्तपरिवघो विनयादि गुणालयः ।
विजयानंदनामास्य बंधुः साधुशिरोमणिः ॥ ८ ॥

श्रेष्ठी धर्म्माभिधो(भ्राता) धर्मकर्मठमानसः ।
अजिह्मं ब्रह्मचर्यंयो यौवनेऽप्युपद्चीचरत् ॥ ९ ॥

चतुर्विंशतिकृत्वो यः पंचशक्रस्तवैर्जिनान् ॥
प्रत्यहं वंदते भूरिभक्तिव्यक्तितरंगितः ॥ १० ॥

करोति प्रतिवर्षं यस्तपः संसारतारणं....
उद्यापना. ..दि सामग्रया कृतयात्रा महोत्सवौ ॥ १२ ॥

कर्म्मणो लक्ष्मणसिंहश्च प्रसिद्धौ पुण्यकर्मभिः ।
गोधालोछादि पुण्याढ्यौ संवेशौ यस्य मातुलौ ॥ १३ ॥

साधर्म्मिकाणां प्रतिसभरुप्यटंकान्वितं मोदकसमर्पयन्ः ।
क्षापर्व्यसमर्च्यसंघेन समं गुरुंश्च श्रीदर्शनोद्यापनमाततान ॥ १४ ॥

चैत्ये श्रीआदिदेवस्य श्रीदेवकुलपाटके ।
कुलोद्योतकरो देवकुलिकां यो व्यधापयत् ॥ १५ ॥

इतश्च श्रीतपागच्छक्षीरार्णवसुधाकराः (शशिप्रभाः) ।
जयंति गुरवः श्रीमत्सोमसुंदरसूरयः ॥ १६ ॥

तेषां गुरूणामुपदेशवाचं निशम्य सम्यग् वरवासनाढ्यः ।
स लेखयन् लक्षमितं जिनेंद्रागमं ह्यमुं पुस्तकमप्यलीलिखत् ॥१७॥

॥ छ ॥ शुभंभवतु ॥

## श्री सं० पा. जै. ज्ञान भं० पाटण.

**श्रीपार्श्वनाथचरित्रम्** ता. प्र. १०७

इति श्रीप्रसन्नचंद्रसूरिपादसेवकश्रीदेवभद्राचार्यविरचितं पार्श्वनाथचरितं समाप्तं ॥
संवत् ११९९ वर्षे अश्विन वदि ६ रवौ
अद्येहाशापल्ल्यां गौडान्वया कायस्थ कवि सेलहण सूनुना पुस्तकं धवलिकेन इदं लिख्यते ॥

प्र.ग्वाटवंशविभूषणं व्य० अणंतो भार्या भट्ट सुता माझा सुतीय व्य० अभयपाल सरवणस्य गृहीतदीक्षास्वश्रेयोऽर्थं ज्ञानाराधनार्थं च न्यायोपार्जितनिजद्रविणव्ययेन । तपागच्छगगनभास्करश्रीभट्टारकप्रभुश्रीजयानंदसूरीणामुपदेशेन प्राकृतश्रीपार्श्वनाथचरित्रं गृहीतमस्ति संवत् १४४० वर्षे । मंगलमस्तु सर्वजगतः ।

## श्री संघवी पाडा जैन ज्ञान भंडार पाटण.

श्रीशांतिनाथचरित्रम् ता. प्र. १०८

संवत् १३८४ वर्षे अश्विनि सुदि १३ सोमे अद्येह श्रीमाले बृहद्गच्छीयश्रीवादीन्द्रदेवसूरिसंताने श्रीविजय....सूरि शिष्य श्रीमाणिक्यसूरिशिष्यश्रीधर्मदेवसूरीणां शिष्यैराज्ञापरिपालकैः श्रीवयरसेण सूरिभिः साध्वी श्री मरुसुंदरि विजयलक्ष्मी सा० पद्मलच्छि सा० चारित्रलक्ष्म्या अभ्यर्थनया स्वश्रेयोर्थं....श्रीशांतिनाथचरित्रं सर्वेषामाचार्योपाध्याय प्रमुखसाधूनां वाचनार्थं पठनार्थं मठे स्थि । लिखिते लिख्यते स्म लिखितं ॥ छ ॥ उदकानल चौरेभ्यो मूषकेभ्य....परिपालयेत् ॥छ॥ ॥छ॥ नंदतु श्रीशांतिनाथस्य चिरकालं यावत्पुस्तकं ।

## श्री सं० पा० जै० ज्ञानभंडार, पाटण.

श्रीअनुयोगद्वारसूत्रं तथा वृत्तिः ता प्र. १०९

ग्रंथाग्रं ५८८८ ॥छ॥ संवत् १४८० वर्षे कार्तिक वदि १२ रवौ महं भीमासुत हरिदासेन लिखितं । शुभं भवतु कल्याणमस्तु । मंगलमस्तु श्रीसंघस्य भद्रं भूयात् श्रीः ॥ छ ॥ श्रीः (पछीथी नंदीसूत्र प्रमाणे छे.*)

## श्री सं० पा० जै० ज्ञान भं० पाटण.

श्रीपार्श्वनाथचरित्रम्

ग्रंथसंख्या ६०७४ ॥ छ ॥ संवत् १४३६ वर्षे पौष सुदि ६ गुरौ श्रीपार्श्वनाथचरित्रपुस्तकं लिखापितमस्ति ॥ छ ॥

श्रीअर्बुदाभिधमहीधरपार्श्ववर्ती ग्रामोऽस्ति दियवराभिधयानां प्रसिद्धः ॥
श्रीवर्द्धमानजिननायकतुंग शृंग प्रासादराजपरिभावितभूमिभागः ॥ १ ॥

---

* पाटण श्री संघवी पाडाना जैन ज्ञान भंडारनी श्री दशवैकालिकवृत्ति तथा पंच भाष्य नामनी बीजी बे प्रतोमां पण उपर प्रमाणे प्रशस्ति छे. अनुसंधान माटे जुओ ता. प्र. ११६ पानुं ७४-७५-७६

तत्रास्ते रणसिंहः सुशुद्धः श्राद्धधर्मधौरेयः ।
धार्मिकमतल्लिका सोऽन्यदैवमशृणोत् सुगुरुवाक्यं ॥ २ ॥

न ते नरा दुर्गतिमाप्नुर्वंति, न मूकतां नैव जडस्वभावं ।
भवांधतां बुद्धिविहीनतां च, ये लेखयंति हि जिनस्य वाक्यं ॥ ३ ॥

निजवित्तस्य साफल्यकृते ज्ञानावृतेर्भिदे । सत तो लेखयामास श्रीपार्श्वनाथचरितं मुदा ॥ ४ ॥छ॥

॥ छ ॥ श्रे० वीरा आल्हू सुतेन धार्मिकरणसिंहेन श्रीतपागच्छगगनभास्करश्रीदेवेंद्रसूरितत्पट्टालंकरणश्रीविद्यानंदसूरि तत्प० श्रीधर्मघोषसूरितत्प० श्रीसोमप्रभसूरितत्प० श्रीविमलप्रभसूरि ॥ १ ॥ श्रीपरमाणंदसूरि ॥ २ ॥ श्रीपद्मतिलकसूरि ॥ ३ ॥ जगद्विख्यातश्रीसोमतिलकसूरितत्प० श्रीचंद्रशेखरसूरि श्रीजयानंदसूरिचरणकमलचंचरीकाणां सांप्रतं गच्छनायकभट्टारक प्रभुश्रीदेवसुंदरसूरिवराणां श्रीज्ञानसागरसूरि श्रीकुलमंडनसूरि श्रीगुणरत्नसूरि महोपाध्याय श्रीदेवशेषरगणि पं० देवप्रभगणि पं० देवमंगलगणि प्रमुखपरिवारसहितानां, श्रीसंघसभामध्ये व्याख्यानार्थं श्रीपत्तनीय सं. सोमर्षि सं० प्रथमादि श्रीसंघस्य लेखयित्वा समर्पितम् ॥ छ ॥

## श्री सं० पा० जै० ज्ञान भं० पाटण.

श्रीपार्श्वनाथचरित्रम् ता. प्र. १११

सम्वत् त्रयोदश पङ्त्तर वर्षे आषाढ सुदी द्वितीया शुक्रवारेण सम्वीग्रामे हुव० नागार्जुन सुत लुणाकेन श्रीपार्श्वनाथचरित्रपरिपूर्णपुस्तकं सावकनेन लिखितं ॥ भग्नपृष्ठी..........
..........यत्नेन प्रतिपालयेत् ॥ १ ॥ यादृशं.................मम दोषो न दीयते ॥ २ ॥
॥ छ ॥ कल्याणमस्तु लेखकपाठकयोः

## श्री सं० पा० जै० ज्ञान भं० पाटण.

श्री शांतिनाथ चरित्रम् ता. प्र. ११२

क्षोणितलप्रसृतमूल उदीर्णशाखो धर्मैकहेतुरुरुपर्वपरंपराढ्यः ।
श्रीमाननेक गुणभृ....प्रदूर्वन (द्रटवत् प्रदूर्वन् )प्राग्वाटवंश उदीर्ण(दितो)विदितोऽस्ति भूमौ॥१॥
तद्वंशार्लंध्यिप्रभवः पूरापिदिनीर्गजतः (ऽऽसोन्तीरा) सत्यपुरोत्मूटी स्टीन (सत् स्फुट श्रीः) ।
श्रेष्ठी विशिष्टः किल सिद्धनागस्तस्याथ भार्याऽभवदंपतोति ॥ २ ॥

चत्वारो....( चत्वारश्च तयोधीराः) तयोः पुत्राः सर्वत्र विश्रताः ।
एको विरड(नामा)न्यो वर्धनो वोणिकस्तथा ॥ ३ ॥

कनक रचि शितभाम मय विधायिक कारित वर–तै
यत् मुचतेऽधुना दधिपद्रे श्रीशांतिजिनभवने ।
पोटक श्रेष्ठिनास्तत्र देवीप्रिया(स्त्रया)स्तयो र्जाता ।
(पुत्रा प्राग्वाटवंशो) सद्गुणाढ्या पटा इव ॥ ५ ॥
तत्राद्य आम्रदत्ताख्यो द्वितीयश्चासुवर्धन
तृतीय सज्जनासन्‍ददायी मूर्तिश्चसज्जन ॥ ६ ॥
येनाकार्यत निर्म्मलोपलम(यीरा) काराशाकप्रभा
श्रे सुपार्श्व तीर्थकरयो(श्रीम पार्श्व सुपार्श्व तीर्थकरयो)मूर्तिर्यशोबिम्बिजम् ।
भाय(तु) स्तरय दीपया (?) चितस(पदा)शताम्याराधक प्राणिना
श्रीमद्वीरजिनेश्वरस्य भवने महाहृतारण्ये पुरे ॥ ७ ॥
पुत्र्यौ च पोटकस्य द्वे आसीत् सीता महत्तरा ।
अपराश्रीति गणि'य ह'या श्रीवादेवीति विश्रुता ॥ ८ ॥
सहलच्छि सज्जनस्याथ प्रियास्त (याम्यां स मतभ्राम्या) समा ।
ययश्चे द्राम्या तोषिता मार्ग जनाल्य (?) ॥ ९ ॥
विश्वप्रसिद्धा कमनीयरूपा समाविता सर्वजनस्य काम ।
तयो सुता कामतुला ईवीचे पचामवकिन्तु न साधुनिधाः ॥ १० ॥
तत्राद्यो धवा धवलो नामा विमलो देशल स्तथा ।
तुर्यो राहड नामा तु सो (पञ्चमो) बाहडो मतः ॥ ११ ॥
धवलस्य छणीति प्रियासी(प्रियाऽऽ)द्या (नयो) ।
वीरचद्रसुतो जातो देवचद्रस्तथा पर ॥ १२ ॥
विजया जय राजान प्रसरण सुत्यास्तत्र वीरचदसुता ।
जाता हि देवचंद्रस्य देवराजात् सुत प्रवर ॥ १३ ॥
पुत्री कैक्कासीरी जाता धवलस्य कलस्वरा ।
नरपत्पाव (नृपमा या) मूना च पुत्री विमलदेवस्ली ॥ १४ ॥
राहडस्य ल्घुभाता बाहडोऽभूत (ज) न प्रिय ।
भार्या जोनमतिश्चास्य पुत्रो जसडुकरतयो ॥ १५ ॥
सज्जनस्य तथाभूता द्वे सुते तत्र शांतिका ।
माता सुकादिपुगणी द्वितीया बाधकि पुन ॥ १६ ॥
अथ तत्र राहडो यो विशेषत सोऽभवद् प्राज्ञ ।
सुजन प्रिय सुशील प्रियधर्मा सर्वदोदार ॥ १७ ॥

सभद्रशालो सुविनंदनाढ्यः । सुसौमनस्योन वपाण्डु कम्बलः
स्थैर्यं प्रभावं दधदुन्नतात्मा सुपर्वभाग्राजति मेरुवयः ॥ १८ ॥

पूजां करोति विधिना स्तवनं जिनानां, साधून्नूनेतदुदितं समयं शृणोति।
दानं ददाति च करोति तपोऽपिशक्त्या, शीलं च पालयति गेहिजने ते तं (ऽनिशं)यः ॥१९॥

तस्य प्रिया देगति नाम । धर्म्मार्थिनी
(धर्मपरायणच । शीलं पवित्रं त्रिविधंदधाना) नित्यं समाराधित भर्तृचित्ता ॥२०॥

या नित्यशः सहजभूपणभूपितांगी लब्धा ऽनवद्यवसना शुचि शीलम्यो (नव्या) ॥
जैनागमश्रवणकुंडलभाक् सुवर्णालंकारमृच्छुभय(व्वचत्रा)चक्र सुकाव्यचक्रा ॥२१॥

चत्वारस्तनया बभूवुरनयोः संपन्नकोशोच्छयाः....
(शास्त्रा) धर्माभ्यासपराः क्रमाज्ञरधराः प्राप्तप्रतिष्ठाः कालौ
सत्यागा गुरुविक्रमाः सुयशसः संसुक्र (कृत्य) साराः प्रजाः
पुण्याः सद्विनयाः पुनंति सदनं संतो नरेन्द्रा इव ॥ २२ ॥

तत्राद्यः चाहडो नाम, वोहडिस्तु द्वितीयकः ।
आसडाख्य स्तृतीयस्तु तुर्य आसाधरस्तथा ॥ २३ ॥

पारि (प्रारोह) प्रहतिसहाः सुवाणयुक्ताः सुवंशसंजाताः ।
आधारूढगुणाया धनुर्ल्लता इव विराजते (दिव्याः) ॥ २४ ॥

राहाडश्रेष्ठिनस्तत्र जाता वध्व इमा वराः ।
अश्वदेवी वसुंधोय, माढू तेजय राजकाः ॥ २५ ॥

तथा यशोधर यशोवीरः यशः कन्तादयं ऽभवन्
पौत्राः पौन्यश्च ये कुय-जासुकाख्या जयंतिका ॥ २६ ॥

एवं कुटुम्बयुक्तस्य राहडश्रावकस्य तस्याथ ।
वोहडिनामा पुत्रः पंचत्वमुपागतः सहसा ॥ २७ ॥

अथ तद्वियोगविधुरः स राहडः श्रावकः स्म चिंतयति ।
हा धिग्धिग् संसारस्वरूपमतिनिंदितं विदुषां ॥ २८ ॥

तथा जीवितं यौवनं सद्वपुःसंपदः सारसीमंतिनीसंगमः सज्जनाः ।
सर्वमित्यादिकं सुजातं महामेघमध्यस्थविद्युल्लताचंचलम् ॥ २९ ॥

अतो मनुष्येण विधेय एव चतुःप्रकारोऽपि जिनेन्द्रधर्मः ।
उशंति तत्रापि च सुप्रशस्यं सज्ज्ञानदानं मुनिकुंजरेंद्राः ॥ ३० ॥

अतोऽहं ज्ञानदानं तत् करोमीति विचिंत्य सः ।
चरितं लेखयामास, शांतेर्बिंबं च कारितं ॥ ३१ ॥

जगदंतगता विमुक्तवत्, ध्रुवमानंत्यजुषोऽपि यद्गुणाः ।
ग्रहचक्रमिवस्थिरा अपि, क्रममाणाश्च जगत्सु कौतुकं ॥ ९ ॥
श्रीदेवसुन्दर युगोत्तमसेवयाऽऽप्त–श्रीमज्जिनागमविचारमहारहस्यः
नंदीश्वरस्तवनमुद्धृतवान्नवातीचारांश्च यो निरुपमानमतिश्चकार ॥ १० ॥
षड्विधान्यहरहः कुरुते स्मावश्यकानि कलिकालविजेता ।
यो यथोचितमयोधनदानै, र्दीनलोकमुददीधरदेव ॥ ११ ॥
श्रीतीर्थयात्रा–जिनबिंब–साधु–पूजा–प्रतिष्ठादिविधानधीरः ।
सदापि साधर्मिकवत्सलत्वं, दानादिधर्मैरजयत् कलिं यः ॥ १२ ॥

अथ च—

संघभारधरणैकधुरीणाः नित्यदेवगुरुभक्तिकचित्ताः ।
क्षेत्रसप्तकनियोजितवित्ता .... .... .... .... ॥ १३ ॥
भूतलप्रथितकीर्त्तिसमूहाः पूरितार्थिजनसर्वसमीहाः ।
भूरिभूतिपरिभूतधनेशाऽस्तेजसाविजितबालदिनेशाः ॥ १४ ॥
मर्त्यलोकहितहेतुकभिंद्रप्रेषिता इव दिवः सुरवृक्षाः ।
पंच तस्य तनया विनयाढ्या भूरिभाग्यविभवा विजयंते ॥ १५ ॥
आसीज्जनाह्लादकमूर्त्तिराद्यः केल्हाभिधस्तेषु धियां निधानं ।
प्रभावकालंकरणस्य यस्य दशाप्यशोभंत दिशो यशोभिः ॥ १६ ॥
आस्ते जगत्ख्यातयशा द्वितीयो हीराभिधानो व्यवहारिहीरः ।
रमांबुधेरतस्य गुणास्तरंगा, इवास्तसंख्याजगतीं स्पृशंति ॥ १७ ॥
निखिलव्यवहारिवर्गमौलिर्वीराकः सुकृती, सुतस्तृतीयः ।
कलयत्यधुना प्रयत्नशीलः श्रेष्ठींद्रोरुपमां सुदर्शनस्य ॥ १८ ॥
भक्तः श्रीगुरुपदयोः सदापि धर्माधारः श्रीजिनशासनप्रभावकः
त्रैलोक्यप्रथितयशा विशां प्रधानं, पाताकः समजनि तत्सुतश्चतुर्थः ॥ १९ ॥
सनंदकः स्फुटविराजिसुदर्शनश्री—
र्लक्ष्मीविलासवसतिः पुरुषोत्तमोऽत्र ।
तस्यांगभूर्जयति पंचमकः क्षमायां धर्मकर्मसु कदापि न रीणाः
गोविंद इत्यभिधया विदितो गुणैश्च ॥ २० ॥
यौवनेऽपि दधता किल शीलं, येन धीरपुरुषाचरितेन ।
स्मारितः स्मररिपुः परिभूय, स्थूलभद्रमुनिवृत्तमिदानीं ॥ २१ ॥
केल्हा भिधानस्य जनी विनीता, ख्यातास्ति हर्षूरिति यत् हुडुर्व्यां ।
येधर्मद्रुमः (?) श्रीगुरुदेवभक्ति रसैः प्रवृद्धः फलतीप्सिताऽर्थैः ॥ २२ ॥

चतुरबुधिमारिकरीव-थतुराशाजनतामनोमताः
तनुजा मनुजाल्मिन्न चतुरासति चतुर्मितारतयो ॥ २३ ॥
व्यवहारिवर्गमस्नमसडदानादिधर्मविधिनिरता ।
**डाहा-भोला-मदन,-माणिक्य** इति क्रमादिदिता ॥ २४ ॥
जगदद्भुतसौंदर्य, मार्ये हीराभिधस्य जयते द्वे ।
आद्या **शाणी**नाम्नी, **हीरादेवी** द्वितीयाच ॥ २५ ॥
भाग्यदाभ्यनिनयादिगुणा द्वौ ते क्रमेण तनयावसुवातां।
आदिमा **विजयकर्ण**, सकर्ण भूरिभूतिमपरा गजाह्व ॥ २६ ॥
मायादिदोषरहिता विभाति, वीराभिधस्य हृदकूरनुकूलचित्ता।
या यौवनेऽपि विमल प्रतिपद्य शील, योषासु धैर्यविरहोप यश पुमीर्हि ॥२७॥
सुतौ तयोर्माग्यभृतो विनीतौ, प्रसुतमूती गुणभूरभूता।
आद्य कनी नदति **देवदत्त**स्तथा। द्वितीयो **गुणदर्शन**नामा ॥ २८ ॥
नाभिधानव्यवहारिमौलेरुभे अमूत दयिते विनीते।
तत्रादिमा सचरित्रे। पवित्रा, **मत्तापदेवी** रतितुल्यरूपा ॥ २९ ॥
अपरा **पद्मलदेवी**, नित्य श्रीवीतरागभक्तिपरा।
तनुजो। मनुजौ घनरामिमे क्रमेणासुवाता द्वौ ॥ ३० ॥
श्रीजिनेंदपदपंकजभक्त सर्वदा सुकृतकर्मसु सक्त ।
आदिमो विजयते **नमराज** कीर्तिपूर्तिजितशारदराज' ॥ ३१ ॥
**उदयराज** इति प्रथितोऽपरस्सकल्पौरविभूषणमगज ।
जयति देवगुरूत्तमभक्तिकृत् मरमिणी रमणीयगु (णा) लय ॥ ३२ ॥
**गोविंद**नाम्नो दयितास्ति **गगादेवी** सदा श्रीगुरुदेवभक्ता'।
न जातु धर्मामृतशीतलं, यन्मन' कलिरसतापयितु समर्थे ॥ ३४ ॥
तयोर्जयेऽभिधमिता सुता श्रीपद महाभाग्यभृतो विनीता ।
भृताश्वतसोऽपि दिशो यशोभिर्येपा (?) हिमरुक् महोभि ॥ ३५ ॥
आद्यो **हरिश्चद्र** इति प्रतीत सुनुर्द्वितीय किल **देव द्र** ।
ततस्तृतीयो **जिनदास**नामा . ॥ ३६ ॥
अथच-श्रीजैनशासनसमुद्धरणैकधीरा श्रीदेवसुदरयुगप्रवरा विरेजु ।
तेषा पदे नमसुदे विहितावतारा **श्रीसोमसुदरगुरुप्रवरा** जयति ॥ ३७ ॥
निर्दोषलब्धिभवन सुभनातिमाथि, महास्यधाम भरतोत्तमसयमान्या ।
किंचात्र सर्वगुणसुदरशिष्यपक्षीमाभूता जयत्यर्धिजिनेश्वरशासने ये ॥ ३८ ॥

चत्वारः श्रीमदाचार्याः स्थापितास्तैर्युगोत्तमैः ।
एकपादपि यैर्धर्मश्चतुष्पादभऽवत्कलौ ॥ ३९ ॥
शांतिस्तवेन जनमारिहृतस्सहस्रनामावधानिविरुदा महिमैकधाम ।
तेष्वादिमा वि।वधशास्त्रविधानधातृतुल्या जयंति मुनिसुंदरसूरिराजाः ॥ ४० ॥
षट्त्रिंशता सूरिगुणैरलंकृतास्तथा द्वितीया विजयं वितन्वते ।
जगन्नुताः कृष्णसरस्वतीति सद्यशः श्रियः श्रीजयचंद्रसूरयः ॥ ४१ ॥
गाढंजयंति महविद्याविडंबनप्रमृतिशास्त्रविवृत्तिकृतः ।
श्रीभुवनसुंदरगुरूत्तमास्तृतीया यशोनिधयः ॥ ४२ ॥
तुर्या जयंति जगति विदिता निखिलांगपाठपारगताः ।
श्रीजिनसुंदरगुरवः प्रज्ञाऽवज्ञातसुरगुरवः ॥ ४३ ॥
अतश्च—गणाधिपश्रीगुरुसोमसुंदरप्रभूपदेशं विनिशम्य सुंदरं ।
श्रुतस्य भक्तैरधुना जिनाधिपप्रवर्त्तमानागमलेखनेच्छया ॥ ४४ ॥
गोविंदनगराजाभ्यां, नंदेभमनुवत्सरे(१४८९) । लेखितः पुस्तको
जीयादाचंद्रार्क प्रमोददः इति प्रशस्तिः ॥ श्रीः ॥छ॥श्रीः ॥ ४५ ॥

## श्री सं. पा. जै. ज्ञा. भं. पाटण.

श्रीपंचांगीसूत्रवृत्तिः ता. प्र. ११४

संवत् १४५५ वर्षे ज्येष्ठ सुदि ३ गुरु पंचांगी सूत्रवृत्ति पुस्तकं लेखयांचक्रे ॥
श्रीकायस्थविशालवंशगगन(चंद्रो)ऽत्र जानाभिधः
संजातः सचिवाग्रणी (गुरुमतिः) श्रीस्तंभतीर्थे पुरे
तत्सूनुस्थिरयन् क्रियैककुशलो भीमाभिधो मंत्रीराट्
तेनायं लिखितो बुधावलिमनः प्रीतिप्रदः पुस्तकः ॥ १ ॥
शुभं भवतु श्रीसंघभट्टारकस्य ॥ श्रीः ॥ नमः श्रीसर्वज्ञाय ॥
प्राग्वाटवंश मुकुटः प्रकटप्रतिष्ठः श्रेष्ठी बभूव भुवि लांपण इत्यभिख्यः ।
(शीतांशुर विमलवद् रसेषु कीर्तिपुंण्य सर्वतोऽपि धरणौ) धवली चकार ।
एतत् (पाणि) गृहीति विश्रुतादि (श्राद) शीला
जिनवचन वह्नरसाया गंगामनुसरति निजचरितैः ॥ २ ॥
आल्हरित्यभिधाना सकर्णजनवर्णनीयगुणनिवहा ।
अभवत्तयोस्तनूजा जिनादिपूजाविधानरता ॥ ३ ॥

तामुपयेमे सुवृत्तिमैत्री वण विर(धनदोषमा)मो विशदबुद्धि ।
(धीसख शतमखविदा चांपलदेवी प्रभूततनूजन्मा ॥ ४ ॥

सत्पात्रवाप सफलीकृत (मूरि) वित्ता श्रीधर्मकर्मकरणप्रवणैकचित्ता ।
या स्वे विशुद्धचरिते विदुषामदोषश्लाघास्पद समजनि (मूल) सत्प्रतिष्ठा ॥ ५ ॥

श्रीमत्तपागणनभोंगणसूरसूरिश्रीदेवसुंदरगुरुप्रवरोपदेशं ।
श्रुत्वा सुधासममसीमगुणा समाना सा श्रावकाचरणचारुरतऽथ अन्हू ॥ ६ ॥

मत्वा सारतर धन धनफल विष्णुर्निजश्रद्धया
वैदेषुदधिशीतदीधिति १४५४ मिते सवत्सरे वैक्रमे
लक्ष्मीविश्रयणनातिशायिजनते श्रीस्तम्भतीर्थाभिधे
द्रगेऽलीलिखदेतदद्भूततमम पचागिकापुस्तक ॥ ७ ॥

आचंद्रादित्य . .
मेतच्च जीयात् ॥ शुभं भवतु श्रीसंघस्य ॥

## श्री० सं० जैं० ज्ञा० भं० पाटण०

**श्रीहेमधातुपारायणवृत्ति·** ता. प्र. ११५

संवत् १३०७ वर्षे चैत्र वदि १३ भौमे श्रीविसलदेवकल्याणविजयराज्ये ग्राम.. . ( महं श्री धांधा प्रभृति ) पचकुले प्रतिपत्तौ श्रीचंद्रगच्छीयश्रीचंद्रप्रभसूरिशिष्यै । आचार्यश्रीनेमिप्रभसूरि. . श्रीहेमचन्द्रधातुपारायणवृत्तिपुस्तिका लेखिता । लिखिता च. ठ० देव.

## श्री० सं० जैं० ज्ञा० भं० पाटण०

**श्रीजीवाभिगमवृत्तिः** ता. प्र. ११६

समाप्ता जीवाभिगमाध्ययनशास्त्रोपदेशटीका ॥ कृतिर्हरिभद्राचार्यस्येति ॥ ग्रंथाग्रं १२०० ॥ संवत् १४४४ वर्षे फागुण शुदि १५ शनौ अद्येह श्री पत्तने ॥

ओकेशो महेश्वरगोत्रे नारायणीयशाखायां ।
वृद्धो वणिगिति विदितो नरसिंह साधुवर आसीत् ॥१॥

तस्य च भार्या मोही तनूद्भवा सत सांगणः प्रथम ।
छीता आपा देदा तिहु रामा ख्यमाख्या ॥२॥

सांगणवधूर्धनश्रीः पुत्रौ द्वौ एतयोश्च नरदेवः ।
जगसिंहश्च लघुर्वधू जैयतश्रीरंगजात्रयश्चामी ॥ ३ ॥
आद्यौ हि गोना-वइजाभिधानौ तृतीयबंधुः किल देवसिंहः ।
यो देवगुर्वादिकधर्मकार्ये कृताभियोगः शुभभाग्ययोगः ॥ ४ ॥
वइजाकस्य तु भार्या जयश्रीरंगजाश्चतुःसंख्याः ।
साधुवरवरनागसिंहच्छाजल- रवर्म-दूदाख्याः ॥ ५ ॥
साधोश्च देवसिंहस्य भार्या कर्म्मसिरीति ।
त्र्याणां पुरुषार्थानां पात्रं सुपात्रमास्ते कुलं ह्रदः ॥ ६ ॥
श्रीमत्तपागणनभोंगणभास्कराणां श्रीदेवसुन्दरगुरूत्तमसूरिराजां ।
धर्म्मोपदेशवशतोऽवगताप्तवाक्यः स्वोपार्जितार्थनिवहस्य फलं जिघृक्षुः ॥७॥
सुधीः सहस्रानिह देवसिंहो ग्रन्थाग्रतः पंचदश प्रमाणान् ।
श्रीताडपत्रेषु जिनागमस्य स लेखयत्संप्रतिपुस्तकेऽत्र ॥८॥
सिद्धप्राभृत-जीवाजीवाभिगमवृत्तिकेऽलेखयत् ।
अणहिलपाटकनगरे त्रिवार्द्धिवार्धीन्दुमिते वर्षे (१४४३) ॥ ९ ॥
॥ शिवमस्तु ॥

## श्री० सं० पा० जै० ज्ञा० भं० पाटण०

**श्रीयोगशास्त्रम्** ता. प्र. ११७

संवत् १२७४ वर्षे मार्गवदि ८ गुरावद्येह प्रल्हादनपुरे ॥

## श्री० सं० पा० जै० ज्ञा० भं० पाटण०

**श्रीदशवैकालिकनिर्युक्तिः** ता. प्र. ११८

ग्रंथाग्रं भाष्यसहितं ७५५० ॥छ॥ शुभं भवतु । सर्वेषां कल्याणमस्तु ॥छ॥ संवत् १४८९ ज्येष्टमासे कृष्णपक्षे द्वितीयायां तिथौ गुरुदिने लिखितं डूंगरपुरे पचाकेन ॥ छ ॥

## श्री० सं० पा० जै० ज्ञा० भं० पाटण०

**शवैकालिकवृत्तिः** ता. प्र. ११९

संवत् १३२६ वर्षे मार्ग सु. ४ गुर प्रभातेऽद्येह श्रीमदणहिल्लपाटके समस्तराजावली ...कृतमहाराजाधिराज श्रीमद्अर्जुनदेवराज्ये महामात्य श्रीमालदेवप्रतिपत्तौ श्राव........ र्थं सलपुरेत्यते....श्री वीतराग प्रसादात् धनपाल सु.श्रा.मुझाकाभ्यामात्मनः शुद्धयै लिखितमिदं॥

## श्री० सं० पा० जै० ज्ञा० भं० पाटण०

**श्रीकथारत्नसागरः** ता. प्र १२०

( अतर्गत अगडदत्तकुमार चरित्र )

इति श्रीरुद्रपल्लीयश्रीनरचंद्राचार्यविरचितकथारत्नसागरे अगडदत्तकुमारचरित्रं नाम पंचदशस्तरंगः ॥ संवत् १३१९ वर्षे भाद्रपदि ५ शुक्रे अद्येह श्रीमत्पत्तने महाराजाधिराज श्रीमदर्जुनदेवविजयराज्ये तत्पादपद्मोपजीविमहामात्यश्रीमाल्हदेवप्रतिपत्तौ महं० वीजाप्रभृतिपंचकुल प्रतिपत्तौ ठ० धनपालेन श्रीकथारत्नसागरपुस्तिका लिखिता ॥ मंगलं महाश्रीः ॥

## श्री० सं० पा० जै० ज्ञा० भं० पाटण०

**श्रीज्ञानपंचमीकथा.** ता प्र १२१

संवत् १३१३ वर्षे चैत्र सुदि ८ रवौ महाराजाधिराजश्रीवीसलदेवकल्याणविजयिराज्ये तत्पादपद्मोपजीविनि श्रीनागडमहामात्ये समस्तव्यापारान् परिपंथयत्येवं काले प्रवर्तमाने (धवलक्कनगरे ... ... ललितसुंदरी गणिन्या) ज्ञानपंचमी पुस्तिका लिखापिता ॥ छ ॥ छ ॥

## श्री० सं० पा० जै० ज्ञा० भं० पाटण०

**श्रीद्व्याश्रयमहाकाव्यम्** ता प्र १२२

संवत् १३३५ वर्षे श्रावण सुदि १५ सोमे अद्येह श्रीपत्तने श्रीसारंगदेवराज्ये द्व्याश्रयमहाकाव्य ठ० रत्नपालेन लिखितं ।

## श्री० सं० पा० जै० ज्ञा० भं० पाटण०

**श्रीमव्याख्याननिर्युक्ति** ता प्र १२३

संवत् ११९८ आषाढ सुदि ३ गुरु दिने ॥ अद्येह श्रीमदणहिलपाटके समस्तराजावलीसमलंकृतमहाराजाधिराजपरमेश्वरश्रीमज्जयसिंहदेवविजयराज्ये, श्रीमदणहिलपाटके अद्य लिखितं श्रीपृथ्वीपुरे, संविग्न भक्ति... आर्यिका, चातुर्वर्ण्यस्य, नैगमान्वयकायस्थ । पं० ॥ माइलेन आवश्यकवृत्तिकेयं लिखिता ॥ शुभं भवतु लेखकपाठकयोः ॥ छ ॥ ... ... न दृश्यते ॥

## श्री० सं० पा० जै० ज्ञा० भं० पाटण०

**श्रीउपदेशमालावृत्ति** ता प्र १२४

संवत् १२४८ वर्षे पौष वदि ५ रवौ अद्येह श्रीमदणहिलपाटकनगरे समस्तराजावलीविराजितमहाराजाधिराजश्रीभीमदेवराज्ये वर्तमाने लि० गणपतिचंद्र लिखिता ॥ ग्रंथाग्र २००० ॥

## श्री सं० पा० जै० ज्ञा० भं पाटण

श्रीशतकचूर्णिटिप्पकनम् ता. प्र. १२५

श्री श्रीमालकुले विपुले जज्ञे श्रेष्ठी **यशोधनः** ।
समभूत्तदीयदयिता जीवहिता **नागदेवीति** ॥ १ ॥
सा चतुरोऽसूत सुतांश्चतुरः **श्रीवच्छ** इति ततोऽप्यन्ये ।
**सालिग सोहिक पासुक** संताश्च **यशोमतिश्च** सुता ॥ २ ॥
इतिश्च–अस्मिन्नेव सुपर्व्वणि वंशेऽभूदुसभ इति शुभः श्रेष्ठी ।
तस्य **श्रीरिति** जाया तयोः सुता **वलुके**त्यस्ति ॥ ३ ॥
तां **सालिगो**ऽनुरूपां परिाणन्ये **नयवर्ती** तयोस्तनयः ।
शासनदेवो गुरुदेवचरणयुगकमलकलहंसः ॥ ४ ॥
स जनन्याः श्रेयोऽर्थ **श्रेष्ठमतिः** शतकचूर्णिटिप्पनके ।
लेपयतिस्म ततोऽदान्**महिमा गणिनी** पठनहेतोः ॥ ५ ॥
भूमिर्नभः सुमेरुः सवितृशशिनौ चराचरा सुभृतः ।
यावदिह संति लोके तावदिह पुस्तिका नंद्यात् ॥ ६ ॥

## श्री सं० पा० जै० ज्ञा० भं० पाटण

श्रीप्रकीर्णकसूत्रम् ता. प्र. १२६

संवत् १२९० वर्षे प्रथम श्रावण वदि १० शनावद्यह श्रीमद्देवपत्तने गंडश्रीविनेयप्रभृति पंचकुल प्रतिपत्तौ **महं सीहाकेन** नीतिवाक्यामृतसूक्तपुस्तिका लिखापिता ॥ मंगलं महाश्रीः ॥ शुभं भवतु ॥ लेखकपाठकयोः ॥ छ ॥ छ ॥ यादृशं .... .... .... .... .... मम दोषो न दीयते ॥ छ ॥

## श्री सं० पा० जै० ज्ञा० भं० पाटण

श्रीआचारांगसूत्रवृत्तिः ता. प्र. १२७

संवत् १४५० वर्षे भाद्रपद वदि १ शुक्रे रेवत्यां पुस्तकं लिखितं ॥ ९० ॥
सद्धर्म्म व्यवहारी **देसल**सुतः ख्यातः क्षितौ सर्वतः
**प्राग्वाटान्वयमंडनं** समभवन् **मेघाख्यसंघाधिपः** ।
जाया **मिणलदेवी** नाम विदिता तस्य प्रशस्याशया
पुत्री पुण्यवती तयो **गुणवतीस्याणिति** संज्ञाऽभवत् ॥ १ ॥
सम्यग् ज्ञानमिदं मधिकसुतः (शमाधिक पदं) श्रद्धामूधर्माग्रणीः

जिनमगपदेसु ·शिगाहाना (श्रीमज्जैन महोपदेश सुभगो) (धानारू नामाधनी)
. जाया साजनितस्य घ य चरिता पुण्यकीया (स पुण्य कार्य क्षमा)
नि य श्रीजिन पुजनैक रसिकादानादि बद्धादरा ॥ २ ॥
श्रु या श्रीगुरदेव सुदरमहा र्म्मोपदेश तथा
वर्षे विक्रमतो नभशरनदिनागेंदु सरये (१४५०)
सुदी द्वितीया पुस्तकमिदस्वश्रेयसे लेखितम्
नि य

## श्री सं० पा० जै० ज्ञा० भं० पाटण

**श्रीन्यायकदलीवृत्ति॰** ता प्र १२८

सवत् १२४२ फाल्गुन वदि ६ गुरौ प परमचद्रगणिना देशनामासाद्य प० महादेवेन न्याय कदलीवृत्तिसूत्र समाप्तमिति ॥

## श्री सं० पा० जै० ज्ञा० भं० पाटण

**श्रीधर्मशर्म्माभ्युदययकाव्यम्** ता प्र. १२९

सवत १२८३ वर्षे श्रीहरिचद्रकविविरचितधर्म्मशर्म्माभ्युदयकाव्यपुस्तिका श्रीरत्नाकरसूरि आदेशेन कीर्तिचद्रगणिना लिखितेति भद्र।

## श्री सं० पा० जै० ज्ञा० भं० पाटण

**श्रीयोगशास्त्रम्** ता. प्र १३०

सवत् १२५५ वर्षे मार्ग शुदि १ रवौ ॥ अद्येह श्रीपत्तन श्रीदेवाचार्यवसत्या, श्रीधनेश्वर-सूरीणा हेतोर्द्वादशसहस्रयोगशास्त्रवृत्ति परमश्रावक ठक्कुर वर्द्धमानेन सुदर्शनग्रामवास्तव्य पारि० वीशल पार्श्वात् लिखापिता ॥ छ ॥ शुभ भवतु ॥ प्रथम प्रकाशवृत्ति ग्रथ १८०० अष्टा दश शतानि ग्रंथ सख्या ॥ शिवमस्तु ॥ छ ॥ छ ॥

## श्री सं० पा० जै० ज्ञा० भं० पाटण

**श्रीति:योगाल्हीमकीर्णम्** ता प्र १३१

॥ ९० ॥ श्रीयोगिनीपुरवासिमिमहर्द्धिके राजमा यै सकलनागरिकलोकमुख्यै ठ० दूदा ठ० ठवुरा ठस पदमसीहै स्वपितु सा० राजदे श्रेयसे अनुयोगद्वार चूर्णि । षोडशकमूत्रवृत्ति ति-ष्योगाली श्रोताहे ॥ तथा श्रीऋषभदेवचरित्र १२ सहस्र कागदे पच पुस्तिका तपागच्छ नायक श्रीदेवसुदरसूरीणामुपदेशेन स० १४५२ श्रीपत्तने लेखिता इति भद्रं ॥ ■ ॥

## श्री सं० पा० जै० ज्ञ० भं० पाटण

श्रीकुलकप्रकरणम् ता. प्र. १३२

सर्वसंख्या ग्रंथ ॥ ३२४० ॥ संवत् १२७९ वर्षे चैत्र वदि ३ रवौ अद्येह श्री चंदावत्यां श्री-सोमसिंहदत्तविजयराज्ये पुस्तिकेयं समर्थिता लिपिता ॥ मलयचंद्रेण ॥ छ ॥ छ ॥ शुभं भवतु ॥

## श्री. सं. पा. जै. ज्ञा. भं. पाटण.

श्रीनिरयावलीसूत्रम् ता. प्र. १३३

संवत १३१० वर्षे ॥ गंभुकायामुपांग पंचकस्य वृत्तिर्लिखिता ॥

श्री निरयावलीसूत्रम्

संवत् १४७३ वर्षे सुदी १० गुरौ अद्येह स्तंभतीर्थे लिखिता ॥

## श्री. सं. पा. जै. ज्ञा. भं. पाटण.

श्रीशांतिनाथचरित्रम् ता. प्र. १३४

.... .... .... प्राग्वाटान्वयमंडनं समजनि श्रीशालितः शालिरित्याख्यातिं (प्रगतः) ।
पुमाननुपमार्हद्भक्तियुक्तोऽस्य तु । वंशे शक्तिकुमारतः समभवत् आसाहीरिति स्फातिमान् ।
तत्पुत्राः शिवदेविकुक्षिसरसि (सो) हंसा इमे जज्ञिरे ॥ १२ ॥
वोसिरि साढल सांगण नामानः पुण्यसिंह नामाच ।
स्वपितुः पुण्यायाष्टापदचैत्यं ये विरचयांचक्रुः ॥ १३ ॥

श्रीदेवसूरिप्रभवः प्रतिष्ठां चक्रेस्तथा श्रीमुनिदेवसूरिः तदीयसहाय्यवशेन नव्यं श्री-शांतिनाथस्य तथा ॥ चरित्रं ॥ ग्रंथाग्रंथ ४८५ ॥ शुभं भवतु ॥

## श्री. सं. पा. जै. ज्ञा. भं. पाटण.

श्रीयोगशास्त्रम ( तृतीयः प्रकाशः ) ता. प्र. १३५

संवत् १२९५ वर्षे भाद्रपद सुदि ११ रवौ ॥ स्तंभतीर्थे महामंडलेश्वर राणक श्रीवीसलदेव-विजयराज्ये तन्नियुक्तदंडाधिपति श्रीविजयसीहप्रतिपत्तौ श्री संडेरगच्छीय गणिआसचंद्र शिष्यपंडितगुणाकरस्य सौवर्णिक पल्लीवाल ज्ञातीय ठ० विजयसीह ठ० सलपणदेव्यो सूनु मसै च० तेजःपालेन लेखयित्वा आत्मश्रेयसे पुस्तिका प्रदत्ता ॥ लिपिता ठ० रतनसीहेन ॥ ॥ मंगलमस्तु ॥ ग्रंथाग्रं १३०० ॥

## श्री. सं. पा. जै. ज्ञा. भं. पाटण.

श्रीदेशीनाममाला ता. प्र. १३६

संवत् १२९८ वर्षे अश्विन सुदि १० रवौ अद्येह श्रीभृगुकच्छे महाराणक श्री वीसलदेव .. .. महं श्री तेजपाल सुत महं श्री लूणसीहप्रभृतिपंचकुलप्रतिपत्तौ आचार्यश्री जिणदेव ... देशीनाममाला लिखापिता। लिखिता च कायस्थ ज्ञातीय महं जयंतसिंह ॥.

## श्री. सं. पा. जै. ज्ञा. भं. पाटण.

श्रीसिद्धहेमलघुवृत्तिः ता. प्र. १३७

सं० १३७० आश्विन वदि ४ स्तंभतीर्थे पूज्य श्रीरत्नाकरसूरीणां आदेशेन ले० सागरेण पुस्तिका लिपिता ॥ छ ॥ ग्रंथाग्रं ३४०० ॥ छ ॥

## श्री० सं० पा० जै० ज्ञा० भं० पाटण

श्रीउपदेशमालावृत्ति ता. प्र. १३८

॥ ९० ॥ संवत् १३९४ वर्षे कार्त्तिक सुदि प्रतिपदायां शुक्रे श्रीयुगादिचैत्यमंडिते मडवाडा ग्रामे श्रीउपदेशमालावृत्ति सुगुरुश्री सर्व्वदेवसूरिवाचनक्रियायोग्यार्थं प. अभय .. ना लिखिता.

## श्री० सं० पा० जै० ज्ञा० भं० पाटण

श्रीदशवैकालिकलघुटीका ता. प्र. १३९

सं. १२४८ वर्षे श्रावण सुदि ९ सोमेऽद्येह श्रीपल्यां दंड० श्री अभयडप्रतिपत्तौ श्रु दशवैकालिकटीका लिखिता ॥

श्रीसित्तरीभाष्यम् ता. प्र. १४०

सवत् १२५८ श्रावण सुदि ७ सोमे श्री मदणहिल्लपाटिका श्रीहर्षपुरीयगच्छे श्रीलघुवीरे सत्का अजितसुन्दरीगणिन्या पुस्तिका लिखापिता ॥

## श्री० सं० पा० जै० ज्ञा० भं० पाटण

श्री नागानंद नाटकम् ता. प्र. १४१

सं. १२५८ वर्षे ॥ श्रीमदणहिल्लपाटके। मुनिचंद्रेण लोकानंदयोग्या पुस्तिका लिखिता॥

## श्री० जै० सं० ज्ञा० भं० पाटण

श्रीदशवैकालिकसूत्रम् ता. प्र. १४२

सवत् १२९३ वर्षे भाद्रवा सुदि १० बुधे ॥ पुस्तिकेयं लिखितेति श्राविका चांपल बोरम

लिखिता एषा पुस्तिका ॥ उदकानलचौरेभ्यो मूषकेभ्यस्तथैवच । रक्षणीया प्रयत्नेन यस्मात् कष्टेन लिख्यते ॥ शुभं भवतु ॥

## श्री० जै० सं० ज्ञा० भं० पाटण

श्रीअष्टमपर्व ( त्रिषष्ठीयं ) ता. प्र. १४३

संवत् १४३४ माघवदि सप्तम्यां तिथौ अद्येह युवराजवाटके पुस्तकं श्रीनेमिनाथस्य अलेपि ।

## श्री० सं० पा० जै० ज्ञा० भं० पाटण

श्रीव्याकरणटिप्पनकम् ता. प्र. १४४

संवत् १२८८ वर्षे आषाढ वदि अमावास्या दिने भौमे राणक श्री लावण्यप्रसाद देवराज्ये वटकूपके वेलाकुले, प्रतीहारशखाटप्रतिपत्तौ श्रीमद्देवचंद्रसूरिशिष्येण भुवनचंद्रेण क्षुल्लकधर्मकीर्तिपाठयोग्या व्याकरणटिप्पनकपुस्तिका लिखितेति ॥ छ ॥ पं० सोमकलशेन शोधिता च ॥ छ ॥ यादृशं .... .... मम दोषो न दीयते ॥१॥ शिवतातिरस्तु श्रीजिनशासनस्येति ॥छ॥

## श्री सं० पा० जै० ज्ञा० भं० पाटण

श्रीपुष्पमालावृत्तिः ता. प्र. १४५

संवत् १४८५ वर्षे भाद्रपद वदि ५ भोमे पुष्पमालावृत्तिः संपूर्णा लिखिता ॥ ट ॥ स्वस्ति ओकेशवंशे श्राद्धधर्मधुरीणोऽरीणदानादिपुण्यकृत्यकरणनिपुणः ठ० पूनाभिधानः श्रावक पुंगवो भूत् । ततपुत्रः पवित्रः ठ० धणपालइति तस्य सहचारिणी सदाचारिणी पापप्रवेशवारणी ठ० धांधलदेवीति जज्ञे ततकुक्षिसमुद्भवेन अतिअद्भुतसुकृतप्रोद्भूतश्रीदेवताप्रसादसाधिताधिकतरसकलशुभकृत्यनिर्वहेन ठ० मोपाभिधेन पूज्य भ० अभयसूरि सद्योग्यामृतवृष्टिसमुत्पन्नभावनाकल्पवल्लीप्रभावात् श्रीपुष्पमालावृत्तिपुस्तकं स्वपित्रोः श्रेयोऽर्थमलेखयत् शुभवृद्धये ॥

वृद्धः पुत्रः ठ० देपाल लघु धनपाल नामाभृत् मोपा लघुभ्रातृ पेताक आसीत् ॥

## श्री० जै० सं० ज्ञा० भं० पाटण

श्रीत्रिषष्टीयं अष्टमपर्व ता. प्र. १४६

संवत् १४३६ वर्षे भाद्रपद वदि ५ भूमे लक्षता पं० मलयचंद्रशिष्य आल्हाकेन लिखितमिति भद्रं ॥ भग्न.... परिपालयेत् ॥

श्रीमाळे भुवनोत्तंसे वंशे मौक्तिकवत् पुरा देवसिंहाभिधः श्रेष्ठी जातो जिनमतोद्धृतः ॥ २ ॥

विमुक्त माया जाया च तस्य देवलदेव्यभूत् ।
भाउ नाम्नी हिताषुण्य सार्वतस्य तु भ्रातृजा ॥ ३ ॥
दयादाक्षिण्यदमतादानमानादिभिर्गुणै. ।
भाउ नाम्नीं विहायान्यां नाज्ञापुर्वेयं भुवि ॥ ४ ॥
इतश्च–श्रीमत्कोरटगच्छाब्धि समुल्लासमुधानिधिः ।
सूरिः सैद्धांतिको जज्ञे सार्वदेवप्रभुः पुरा ॥ ५ ॥
तत्पद्दकमलाकेलिहंस. शीलकुलोज्वल ।
श्रीनन्नसूरिसूरींद्रस्ततो जयति संप्रति ॥ ६ ॥
तन्मुखादेशनां श्रुत्वा पित्रो पुण्यविवृद्धये ।
श्रीजिनाजितनाथस्य सा चरित्रमलीलिखत् ॥ ७ ॥
॥ मंगलं भूयात् ॥

## श्री० जै० सं० ज्ञा० भं० पाटण

**श्रीउपदेशकंदलीवृत्ति·** ता. प्र. १४७

संवत् १२९६ वर्षे फागण सुदि ९ शुक्रे समस्तराजावलीपूर्वं महाराजाधिराज श्रीभीमदेव-कल्याणविजयराज्ये तन्नियुक्तमहामात्यदंडश्रीतातेश्रीश्रीकरण परिपथयतीत्येवकाले पुस्तकमिदं लिखितमिति ॥

## श्री० जै० सं० ज्ञा० भं० खंभात

**श्रीकुमारपालप्रतिबोध** ता. प्र. १४८

संवत् १४५७ वर्षे द्वितीय भाद्रपद शुदि ४ तिथौ शुक्रे श्रीस्तंभतीर्थे बृहत्पोषधशालाया मग० श्री जयतिलकसूरीणां उपदेशेन श्रीकुमारपालप्रतिबोधपुस्तकं लिखितमिदं ॥ कायस्थ ज्ञातीय मह मंडलिक सुत पेना लिखितं ॥ चिरं नंदतु ॥ छ ॥

## श्री जै. सं. ज्ञा. भं. खंभात.

**श्रीआवश्यकवृत्ति** ( द्वितीय खंड ) ता. प्र. १४९

संवत् १४४२ वर्षे श्रीस्तंभतीर्थे पौषधशालायां आवश्यकवृत्तिद्वितीयखंडपुस्तकं लिखित॥

## श्री० जै० सं० ज्ञा० भं० पाटण

**श्रीकालिकाचार्यकथा.** ( कल्पसूत्रयुतं ) ता. प्र. १५०

॥ ९० ॥ श्रीकेशवंशो भुवनाभिरामष्ठायाममाश्रितस वसार्थ ।
शौराणकीयाहित विशालशाखा साकारपत्रा[illegible]राजमाना ॥ १ ॥
तत्रामरद् मसमर्याच्छदुराहदरिसजीवजीवितसदाशयराजहंस. ।
पूर्व पुमान् नागहरिनगधारिसारो ।
( पद्यानि त्रुटितानि )

यान्धि(प्रेयान् श्रो वी)रदेवस्य हरिदेवोऽस्ति बांधवः । हर्षदेवीभवाः पुत्रा नरसिंहादयोऽस्य च ॥१५॥

सहोदर्यः सपौन)०पुण्य)स्य लष्मिणिर्धर्म्मकर्म्मठा। कर्मिणिर्हरिसणिश्च पुत्र्यस्तिस्रो गुणाश्रियः ॥१६॥

गुणधरस्य यो भ्राता कनिष्ठो धुंधुकाभिधः । षेढा नामास्ति तत्पुत्रः पवित्रगुणसंततिः ॥१७॥

अथ गुरुक्रमः—श्रीराजगच्छमुकुटोपमशीलभद्रसूरेर्विनेयतिलकः किल धर्मसूरिः ।

दुर्वादिगर्वभरसिंधुरसिंहनादः श्रीविग्रहक्षितिपतेर्दलितभादः प्रभावः ॥१८॥

आनंदसूरिशिष्यश्रीअमरप्रभसूरितः । श्रुत्वोपदेशं कल्पस्य पुस्तिकांनूतनामिमां ॥१९॥

उद्यमात् सोमसिंहस्य स पुण्यः पुण्यहेतवे, अलेखयच्छुभालेखां निजमातुर्गुणश्रियः ॥२०॥

यावच्चिरं धर्म्मधराधिराजः सेवाकृतां सुकृतिनां वितनोति लक्ष्मीं

मुनींद्र नृदिद्वि(वृन्दैर्हि)ह वाच्यमाना तावत् मुदं यच्छतु पुस्तिकासौ ॥२१॥

संवत् १३४४ वर्षे मार्ग्ग० शुदि २ रवौ सोमसिंहेन लिखापिता ॥

## आ० श्री० वि० दा० सु० सं० श्री० वी० त्रि० शा० सं० छाणी

श्रीसार्द्धशतकवृत्तिः ता. प्र. १५१

प्रशस्तिः ॥ ग्रंथाग्रं० ३६४३ ॥ छ ॥ मंगलं महाश्रीः ॥ छ ॥ संवत् १३१३ वर्षे पौषसुदि ७ सोमे अद्येह आशापल्यां श्रीपद्मप्रभसूरिशिष्यनैष्ठिकशिरोमणि वाचनाचार्यविनयकीर्तियोग्यसार्द्धशतकवृत्तिपुस्तिका ठ० विल्हणेन लिखिता । इति भद्रं ॥ छ ॥ शुभंभवतु लेखकपाठकयोः

## आ० श्री० वि० दा० सं० उ० श्री० वी० त्रि० शा० सं० छायापुरी

श्रीयोगशास्त्रम् ता. प्र. १५२

प्रशस्तिः ॥ श्रीयोगशास्त्रचतुर्थप्रकाशः ॥ समाप्तः ॥ छ ॥ छ ॥ संवत् १२८५ वर्षे ज्येष्ठ शुदि ८ गुरौ श्री देवपत्तने साढलयोग्या स्वाध्यायपुस्तिका लिखिता ॥ छ ॥ मंगलं महाश्रीः ॥ छ ॥

## आचार्य श्रीमद् विजयनेमिसूरिश्वरजी संगृहित चित्कोश. खंभात

श्रीअनेकांतजयपताकावृत्तिः ता. प्र. १५३

सा० वरदेवकुलकमलमार्तंडस्वगुर्वा चिता माणिक्यालंकृतोत्तमांग सा० विमलचन्द्र श्रावकरत्नसुतोत्तमाभ्यां श्रीस्वर्णगिरिशिखरालंकारश्रीचंद्रप्रभश्रीयुगादिदेवश्रीनेमिनाथ प्रासाद विधापन श्री शत्रुंजयोज्जयन्तादिमहातीर्थसर्वसंघयात्रा कारापण उपार्जित पुण्यप्रासाद रोपित

कलश दजाभ्यां सा० क्षेमसिंह सा० चाहड सुश्रावकाभ्यां स्वश्रेयसे संवत १३५१ माघवदि प्रतिपदि श्री जिनप्रबोधसूरि पट्टोदयाचलालंकार श्रीजिनचन्द्रसूरि सुगुरु उपदेशेन श्रीमल्हादनपुरे व्याप्तत्रिलोक्यतलमिथ्यात्वमहीपतिविजयन्याय पताका श्री अनेकांतजयपताकापुस्तकं मूल्येन गृहित। आ चंद्रार्कनंदतात् ॥ शुभं भवतु गच्छस्य । ९०००

## आ० श्री० वि० ने० सं० चित्कोश. खंभात.

**श्रीवर्द्धमान स्वामी चरियम्** ता. प्र. १५४

संवत १३२६ वर्षे श्रावणसुदि २ सोमे अद्येह धवलक्के महाराजाधिराज श्रीमद् अर्जुनदेवकल्याणविजयराज्ये तत्पादपद्मोपजीविनि महामात्यश्रीमल्लदेवे स्थंभती निवासिन्या पल्लीवाल ज्ञातीय भण० लींबादेव्या आत्मन श्रेयोऽर्थं इयं महापुरुषचरित्रपुस्तकं लिखापितमिति । मगलं महाश्री. ॥ शिवमस्तु सर्वजगतः परहितनिरता भवन्तु भूतगणा दोषा—प्रयान्तु नाश सर्वत्र सुखी भवतु लोक

## आ० श्री० वि० ने० सं० चित्कोश. खंभात.

**श्रीकथाकोशप्रकरणम्** ता. प्र. १५५

श्रीजिनेश्वरसूरिविरचित कथाकोश प्रकरणं समाप्तमिति । शुभं भवतु श्रीश्रमणसंघस्य । संवत १४८७ वर्षे आषाढमासे शुक्लपक्षे चतुर्दश्यां तिथौ रविदिने श्रीडुंगरपुर नगरे राउल श्रीगइपालदेव विजयराज्ये कथाकोश प्रकरणं लिखित लिम्बाकेन मंगलमस्तु लेखकपाठकयो ॥

## आ० श्री० वि० ने० सं० चित्कोश खंभात

**श्री उत्तराध्ययन वृत्तिः** ता. प्र. १५६

इति परिसमाप्तो भनीभीति पूर्ववद्कोनुगम सम्प्रतिनया( स्ते च प्रा)ग्वदेव ॥ इति उत्तराध्ययनश्रुतस्कंधटीकायाम् श्रीशात्याचार्यविरचितायां शिष्यहिताया जीवाजीवविभक्तिनामकं सदशमं (षट्त्रिंश) त्तमुस(त्तम)मध्ययन समाप्तमिति ॥ (अस्ति निस्ता) . स्वानुर्ग्यो गुरुणाम्नासमन्वितः ।

यासेव्यो भव्यसार्थाना श्रीकोटिक गणद्रुम । तदुत्थवैरशाखायामभ्युदायविशालिनी ।

विशालप्रतिष्ठापेत श्रीचन्द्रकुलसततिः ॥

तस्याश्रेयदगानरयदनिश्रयसद्भावक ( चैयायगाघच्छद् निच यल्सदमाव ) कर्णान्वयोत्य श्रीथारापद्र गच्छ प्रमव भर( न्धनानावन्योजान् )न्त नान् श्रीशांत्याचार्य मंगोय ....( दगरदवशोवो ) श्रोत्रपेयं तद् भो भव्याखिदोषप्रशमकरमतो गृह्यता ल्रियतां .च ॥

श्रीमल्लिनलिहल्लशेखरशांत्यगत्य निर्मापिताऽणहिलवाटकचैत्यगेहे ।(स नृत्य) संपकनहतन कारितो रुसौवर्णरम्यकलशान्वयमूर्त्तिकीर्तिः ॥ ४ ॥ श्रीशांतिसूरिरकरोद् गुणसेन मुनीशितुः सहायेन । शिशुबोधां च सनिर्युक्त्युत्तराध्ययनवृत्तिमेनाम् ॥ ५ ॥ प्रख्यापिता......................सूरिणानणुगुणक विशिष्य वर्यो ॥ ६ ॥ सिद्धांतस्वाध्यायव्यसनीष्वन्यासु वृत्तिपु सतीपु । यद्विरचितेयमपरा तत् सद्भिर्मर्षणीयं मे ॥ ७ ॥ यस्यादलुत गुरुरा-(ने) सीदाकरुराट्शमा गुणनिधिः श्रीसर्वदेवाह्वयः, सूरीशोऽभयदेवसूरिरवनिख्यातः प्रमाणेऽपि च । तस्येयं सुगुरुद्वया........नाय चिरंभुइ प्रवर........ ....यस्यक्रुपवा वृत्तिः ए क्लृप्ताऽनघा, व्याख्यानाय चिरं मुनीन्द्रनिचये भूयादलंघ्यध्वरा ॥८॥ (पूर्णा) कश्रेष्ठिना श्रेष्ठं, श्रेयोनिःश्रेयसार्थिना । लेखितं गुरुभक्त्यास्याः प्रथमं प्रतिपुस्तकम् ॥ ९ ॥ अनाथपिंडदादीनां, दृष्टिवेष्टित चेष्टितैर्निजैर्येन । श्रद्धायित श्राद्धः, स ( तुल्यः ) केन कथ्यताम् ॥ १० ॥ १८००० ॥

## आ. श्री. वि. ने. सू. सं. चित्कोश. खंभात.

**श्रीश्रावकधर्मप्रकरणवृत्तिः** ता. प्र. १५७

........जिनपतिसूरिपट्टलक्ष्मीतिलकश्रीजिनेश्वरसूरिविरचिते श्रीश्रावकधर्मप्रकरणे पूर्व्वपाठमाहात्म्याविर्भावश्चतुर्थप्रस्तावो वृत्तितः संपूर्णः ॥

सत्सूत्रानुगसन्निवेशसुभगं तत्तत्कथारूपकै-
विश्वाश्चर्यपदं चतुर्मुखमिव प्रस्तावलीलायितैः ।
श्रीमत् श्रावकधर्मवत् प्रकरणं पुण्यं पवित्राशयं
श्रुत्वा भव्यजनाः सदा श्रुतपूजा(?)माराधयन्तूत्तमम् ।
नमो अर्हद्भ्यः, नमः श्रीसंघाय, नमः श्री श्रुतदेवतायै ॥ अर्हम् ॥
यो दोषानपहस्त्य कुग्रहकृतान् सिद्धांतदृष्ट्या वस-
त्या वादं गुरुसिद्धिलब्धमिलितप्रामाणिकत्वं नयन् ।
स्थाने दुर्लभराजशक्रगुरुतां प्राप्तसूरीप्रान्वयो- (?)
त्तंसः सूरिजिनेश्वरः समभवत्त्रैविद्यवंद्य...............का (क्रमः) ॥ २ ॥
संवेगरंगशाला जयति सदापि सुधाप्रपेव मुक्त कृता ।
श्रीजिनचन्द्रसूरीन्द्रे नात्याज्ञापते ॥ ३ ॥
येनालंकृत्य वृत्या किमपि किल कृता श्रीनवाङ्गी नवांगी
श्रीपार्श्वं स्थंभने यो दशममिव महासेवधिं व्याञ्जयच्च ।
योगप्राधान्यलक्ष्म्या अपि पतिमुचितं मेनिरे यं द्विषंतो
ऽप्येष श्रीजैनचंद्रो पदवीमभयदेवाख्यसूरेर्विलेभे ॥ ४ ॥

साक्षो यस्य यश कुमार उदित श्रीतारकाधीश्वर
चित्र न कृतवानिलोकमपि च प्रासाधयल्लीलया ।
तीर्थं श्रीजिनवल्लभो गणपति शास्ति स्म सोऽय तत
केनाय नहि नूयते पटुधिया धर्मे गतो धुर्यतां ॥ ५ ॥
*तत्पदे जिनदत्तसूरिरुदगाद् य सतत दैवतै
सेव्यो देवगणैर्भृश मदमृतै शस्तिस्थभागैर्निरै ।
आराध्यो नृपसत्तमै शयैस्तै तै सदाछत
आख्यातोऽम्बिकया नामकथनात् सर्वोत्तम स्व ...सान्वय ॥ ६ ॥
मेरुस्थैरस्य कृते प्रकर्षविधया वाचस्पतिं तु प्रभा
कुद्दरनाकरकल्पपादपसुधाधीराजहंसादिना ।
विश्वे नीतमवस्तुना व्यतनुताम्यास विधाता ध्रुवं
श्रीमान् श्रीजिनचन्द्रसूरिरभवत् चित्रास्पद तत्पदे ॥ ७ ॥
स पादांभोजलीन स्वपरसमयविद्धर्मधूर्धारणो आ
श्चर्यं तान्यभवत्तदपमलयशोगीतकोलाहलेन ।
आस्याम्याशागनाना शिवपदकमलाकार्मण यश्च मुद्रां
गच्छत्याद्त सोऽभूज्जिनपतियतिराट् तत्कपट्टेऽभिषिक्त ॥ ८ ॥
नित्य चैत्यगृहे बताम्रततरै सारस्ततोऽधात्तदा
स्वोदस्तै स्तवनामृतैरुठनक तवन् जिनेंद्रान् प्रति ।
कीर्त्या शसितदिङ्मुख सुविदितो वाचंयमाग्रेसरो
प्यासीच्छ्रीजिनशेखरो गुरुपतिस्तत्पट्टसिंहासने ॥ ९ ॥
दीक्षादानजिनेन्द्रहैमघटसद्दंडप्रतिष्ठो सवा—
रत्नानस्य सदाप्यमुष्य सुगुरोर्नोद्याति हस्ताम्बुजं ।
काले श्रीसुषमा व्यभूयदय तेनावतीर्णे ऽत्र[सा]मान्ये
जैनमतेऽमुनाऽसमिना (तता) साम्प्रत्यपि प्रेक्षते ॥ १० ॥
भाग्यस्यावधिरेव नास्ति कतरा वाचा पुरस्तान् मुधा
रूपेणाथस्ति पुना रतिपति र्बुद्ध्या सुराणां गुरु ।
पूज्याना किमिवोच्यता ननु सदा प्रार्थिनोऽप्यर्थ
कुर्वन्ति प्रतिपत्तिमुन्मदरिव (इद) स्वकेभ्यो गुरुभ्योऽधिकां ॥ ११ ॥
आलस्यैरगृहा धियाऽतिदशाद शा ा न वर्णानपि
इत्यनुवर्तिनु सदापि विदुषा हास्यास्पदंयोऽस्मि न (?) ।

पूज्यैस्तेऽपि विलोकिता मधुरया दृष्ट्या दिनैः कैश्चिद—
ष्युद्यद्बोधविलासतः विदधते शास्त्रं दृशो गोचरं ॥ १२ ॥
करणमेतद्पूज्या स्तृतीय-मिव चक्षुः
भव्यानां सद्बोधनैश्चरितां रचयतुं चक्रुः ॥ १३ ॥
येषां शिष्यकणः श्रीमान् लक्ष्मीतिलकाभिधोऽभिषेकवरः ।
तत्पादकल्पवृक्षच्छायासीनस्तदादेशात् ॥ १४ ॥
एतां प्रकरणवाचंयामिस्त्वां स्वमतिविभवौचित्यात् ।
विलसद्दीर्घालंकारप्रदानतः पूजयामास ॥ १५ ॥
पण्डितः श्रीजिनरत्नसूरिसुगुरुर्भूत्वा-प्रातोमांद्यां कथां स्वयं ।
यत् साहित्यरहः सुकार्भकमिव प्रत्येकबुध्येः कथा ।
संशु बंधेऽध्यापयति स्म किंचन तदेव अत्रन्य धामस्त्यहो ॥ १६ ॥
श्रीवीजापुरवासुपूज्यभवने हैमः सदंडो घटो
यत्रारोप्यत वीरचैत्यमसिधत् श्रीभीमपल्यां पुरि ।
तस्मिन् विक्रमवत्सरे मुनिशशिनेत्रेन्दुमाने....(१३१७)
.... .... .... .... जावालीपुर्यां विभोः ॥ १७ ॥
वीरार्हद्विधिचैत्यमंडनजिनाधीशां चतुर्विंशतेः
सौधेषु ध्वजदंडकुंभपटलिं हैमीं महिष्टैर्महैः ।
श्रीमत्सूरिजिनेश्वरा युगवराः प्रत्यष्ठुरस्मिन् क्षणे
टीकालंकृतिरेपकापि समधात् पूर्त्तिप्रतिष्ठोत्सवं ॥ १८ ॥ युग्मम्
जाग्रत्समग्रविद्यः सुवर्णकृतपाठितो मयैव कविः ।
..................अभयतिलकगणिः ॥ १९ ॥
यत् साहित्यपथातिगं न सहते यत् शब्दशास्त्रोदितं
क्षोदं यत्र जिनेन्द्रतंत्रमपि च स्याद्बाधकं (तद्य)नद्यपि ।
किंचिन्न्यास्थमहं निसर्गजडधीस्तद्यूयमुद्यत्कणः (त्क्षणाः)
सम्यक् शोधयन....पकरोपि शोधन सिद्धयेत्स्म सुधियो बद्धांजलिर्वः प्रति॥२०॥
एतां धृत्तिमलंकृतिं सुकृतिनां कान्तां विनिर्माय या
पुण्यश्रीर्मयकाऽऽर्जि काचन तयाऽर्हत्शासनप्रातितः ।
सर्वाप्यस्तु शुभर्धिभाजनमिह ग्रंथे सहस्रा सहै—
र्षत्रिंशेन शतेन पंचदश संजज्ञे प्रतीता (बुधैः) ॥ २१ ॥

.... .... .... .... .... .... .... ....

समप्रशस्तिः ॥ ग्रं. १५१३१ ॥ शुभमस्तु सर्वस्य संघस्य ॥

एतस्या धात्पुर्णिनी पूर्णिमा लांध्यान्त्वं
हन्तात्यं ततोव्यं सगाना ॥ ११ ॥
गंगाप्रवाहा इव तस्य पुत्रास्त्रयः पवित्रा जयदेवनामा।
कुमारसिंहोऽपि च लक्षणश्च, स्वच्छाशया धर्म्यरसेन पूर्णाः ॥ १२ ॥
पोढावदःपककारिणी....तस्य गुणोदक्ःधिका सममव महादनस्यां ऽगजा
प्रागुवर्तैव सरस्वती प्रणयिनी पुण्योर्मिसंवर्मिता ॥ १३ ॥
पुत्राः सन्त्यनयोर्नयोदयमया मूर्त्या सुधासूतयो
वाचेक्षुप्रविवर्षिणः प्रशमतो मुन्यावताराः किधांशुप्रभाःद्गोगजासिंहकः (?)॥१४॥
तेषु लक्षणसिंहस्य, भार्या लक्ष्मीनिकाऽभवत् ।
भांडशालिकश्रीक्षेत्रासिंहस्य दुहिताऽर्हेति ॥ १५ ॥
धर्मस्नेहमृता पात्रदिरु प्रदर्शनदीपिका
सत्न(कर्म)स्वेकलावत्रया विशेषण द्विधा ........ब्रह्मदेवोऽ नघः ।
व्हालादिस्वकभागिनेयसहितो भव्याक्षरैः पुस्तके
वृत्तिं श्रावकधर्म (क) प्रकरणस्यालेखयामासिवान् ॥ १६ ॥
सूरीशितुर्जिनपतिमभुपट्टचूलालंकारिणो युगवरस्य जोने जिनसूरेः

## श्री हु. मु. जै. ज्ञानभंडार. सुरत

**श्री चतुर्विंशतिका.** ता. प्र. १५८

जैनसिद्धांततत्वपट्पदमकरंदास्वादमधुपेन तपागच्छस्वच्छहृदयमुनिमुख्यमंडनेन श्वेतांवरमतिमातत्वारा ताचार श्वेतरुचिना वाचनाचार्य पं. गुणकरेण इयं संसारार्णवनिमज्जमानजनपारनयन-भंगिनी साहित्यविचारवैदग्ध्यहृदयोल्लासपंकजप्रबोधचंद्रिका चतुर्विंशतिजिनानां स्तुतिर्लिखापिता । इति श्री वैद्यनाथमकृतांतकरय स्नानेन कश्मिरजकर्दमेन—नस्थ ज्ञायते दर्भवती सदायातस्याम-लेखरिथत श्रेणकेन विक्रम संवत १२११ पोष शुद १४ सोमे

पत्र ८४ पंक्ति ३. अक्षर ३५ थी ४० लंबाइ १४×१४॥

## श्री हु. मु. जै. ज्ञानभंडार. सुरत.

**श्री महानिशीथसूत्रम्** ता. प्र. १५९

महानिशीथं समाप्तमिति शुभं भवतु ॥ चतुर्विधेन संघेन महानिशीथपुस्तिका लिखापिता ॥ संवत १३८२ वर्षे अश्विन शुद १३ शुक्रे लिखिता ॥ कल्याणमस्तु ॥

## प्रवर्तक श्री कां. वि. सं, शा, सं, वडोदरा

श्रीशांतिनाथचरित्रम् ता. प्र. १६०

यादृशं पुस्तकं दृष्टं तादृशं लिखितं मया ।

यदि शुद्धमशुद्धं वा मम दोषो न दीयते ॥

संवत् १४१२ वर्षे पौष वदि १२ गुरौ अद्येह श्रीमदणहिल्लपत्तने श्री साधुपूर्णिमापक्षीय-श्रीअभयचंद्रसूरीणां पुस्तकं लिखितं पंडितमहिमाकेन । शुभं भवतु ।

पंक्ति ४. । अक्षर ९० थी १०० ।

## प्र० श्री० कां० वि० सं. शा. सं. वडोदरा

श्रीनिघण्टुशेष ता. प्र. १६१

संवत १२८० वर्षे कार्तिक वदि ५ गुरौ निघण्टुशेषपुस्तिका लिखितमिति ॥ शुभं भवतु लेखक पाठकयो ॥ छ ॥ संवत १३४३ वैशाख सुदि ६ सौ० चांचलसुत सां० भीम सा० श्री साहडसुत सा० जगसिंह सा० खेतसिंह श्रावकैः श्रीचित्रकूटवास्तव्यैर्मूल्येनैव पुस्तिका गृहीता।

## प्र० श्री० कां० वि० सं, शा० सं० वडोदरा

श्रीकल्पसूत्रम् ता. प्र. १६२

संवत १३७७ कार्तिक सुदि १ रवु ( युग मुद्धसुकै ) प्रवर्तमाने अतीव दुष्षमाकाले सागरेण लिखिता श्री रत्नाकरसूरीणामादेशेन ॥

## प्र० श्री० कां० वि० सं० शा० सं० वडोदरा

श्रीशतपदीप्रश्नोत्तराणि ता. प्र. १६३

नमो जिनागमाय । श्रीवीराय नमस्तस्मै,

यो दुर्जाचउ संस्थित दुर्जाख्यानच्छिंदति ।

यज्ज्ञानं पूर्यते पूर्यैस्तदक्षरश्रुत स्तुवे ॥

श्री वाग्भट्टमेरुमहादुर्गे पद्मीपालवंशे श्रेष्ठिलासणश्रावको बभूव,

तत्पुत्रा श्रेष्ठिपासुप-धाहुल-वीरदेवनामानस्त्रयः ।

श्रे, पाहुभार्या रूपिणि मकुक्षिसमुत्पन्नौ द्वौ पुत्रौ श्रीसणगुणदेवसंज्ञकौ ॥

श्रेष्ठिवीरदेवपत्नी वीरमती सोल्ही इति पैतृकं नाम तस्या

पुत्रा गुणैर्विराजा गुणपाल तस्य जाया गउरदेवी

इति विनयज्ञा, इतश्च हम्मीरपत्तन वास्तव्य श्रेष्ठि **वारयनाम** तस्यांगजः श्रेष्ठि **साल्हडः** तस्य सहचारिणी सदा सदनुष्ठानविधान तत्परा श्रेष्ठि **सुहवदेवी** सुश्राविका तत्पुत्रो जिनशासनप्रभावकः सा कडुयाश्रावकः तस्य सहोदरा भगिनीअनारतं दानशीलतपोभावनादिविशिष्टधर्मध्यानपरायणा **मोल्ही** श्राविका। तथा सा **कडुयाभ्राता उदाक**श्रावकस्तस्यांतो होलणस्तेन सा **कडुया** श्रावकेण च उदाश्रावक-श्रेयोऽर्थं श्रीमत्पार्श्वनाथबिंबं श्रीवाग्भट्टमेरुमहादुर्गे महावीरचैत्ये सप्तविंशत्यधिके त्रयोदशशते(१३२७) स्थापितम् सा कडुयाभार्या **कर्पुरदेवी** (१३२७) तत्सुतः **पुण्यपालः** दुहिता **वनीतला**ख्या द्वितीया प्रेयसो **कुर्मदेवी** तस्यास्तनया **धांधलदेवी**ति ।। एवं च कुटुम्बे प्रवर्तमाने प्रवर्द्धमाने च **भीमपल्यां** शुश्रुवेऽन्यदा धर्मदेशना। तद्यथा ।। ज्ञानं दानवामवासरगणैः संपूजितं स्फुर्जितं,ज्ञानादिक (ठ) सम्-द्धिरूप सुकला मृणामिहानृत्रसु । ज्ञानं चेंदुरिवांतरं वितिमिरं सौभाग्यभाग्यास्पदं कल्याणैकनिकेतनं तदथवा कल्पद्रुकल्पं सदा ॥१॥ इत्येतद्गसमुखतो निशम्य श्रुत ज्ञानमेव फलं विज्ञाय श्राविका भक्तिभरश्राविका तद्वचनदर्शनात् संजातहर्षप्रकर्षा आत्मश्रेयसे सर्वसिद्धांतोद्धारसरांसि हसंदे-हद्रुमछेदननिशितकुठारधारां भव्यजनमनःप्रमोदकारिकां । **श्रीशतपदिका**भिधानपुस्तिकां लेखयित्वा वाचनाचार्यमिश्राणां वाचनाय प्रददौ इति, नंद्यान् मेरुर्हरिर्यावित्तिलकद्युतिदो दिशाम् । तावदेषा गुरुप्राज्ञैर्वाच्यमाना सुपुस्तिका ॥१॥ छ ॥ संवत १३२८ वर्षे आषाढ शुक्लपक्षे श्री**अणहिलपाट**-कपत्तने ठ० **वयजासुत** ठ० **सामंतसिंहेन** पुस्तिका लेखितेति भद्रं ॥ छ ॥

## महोपाध्यायश्रीविनयविजयगणिप्रणीतः

# श्रीआनन्दलेखः ।

---

स्वस्तिश्रियां मन्दिरमिन्दिरागर्भार्भिरिन्दिरालीमिव यः बिभर्ति ।
रम्यप्रयाणार्थिनपादपद्मं पद्मं प्रमाद् प्रतिशीर्षपद्मम् ॥ १ ॥
स्वस्तिश्रिय सपदि यत्पदाब्जे रेजे नमतां ततिरच्छकान्ति ।
दिवा दशानामपि सुन्दरीणामादर्शमालेव मणिस्वच्छेव ॥ २ ॥
कर्णोपकण्ठे स्थिरकुन्तलाली कालिन्दकन्येव विभाति यस्य ।
स्वतातसन्तापमपाचिकीर्षुर्विज्ञप्तिमेषा चरिकर्ति नूनम् ॥ ३ ॥
जटाच्छटा राजति राजतीनशिरस्तटे बालकलिन्दजेव ।
वृषाङ्गमौलीश्वरमन्दिराया स्वदातिरेकानु सरिद्वराया ॥ ४ ॥
यत्कर्णयोर्नूनमनूनकान्तिच्छटाच्छलाच्छसति सूर्यजेति ।
यन्धोर्मदीयस्य गुणसमार्थ, शुभोपदेशेन निवर्तयेशा ॥ ५ ॥
यमी समीस्यामशिरोजमालामिषाद्विद धति नु यस्य कर्णे ।
सन्तापिता पापिभिरीश ! तापी, जामिर्मदीया यत किं करोमि ? ॥ ६ ॥
यमीयमीश श्रुतिमूलरूपा वक्तीति केशावलिरुन्नत किम् ।
समादिशेदं दुरितेन केन, प्रमोऽयह से भ्रमणं पितुर्मे ॥ ७ ॥
गङ्गातिगौरी हरचित्तचौरी, हस यसौ तात ! तरङ्गमङ्गैः ।
भामण्डलश्च्छिरोजराजीमिषात् स्वनात यमजामिराह ॥ ८ ॥
प्रतिष्ठिता भावल्ये यदीये, विभाति भातिप्रगुणेऽलकाली ।
इद निरीक्ष्य द्रुतजाततातभ्रान्त्या किमालिङ्गति तारणेयी ॥ ९ ॥
खलेन भिन्ना हलिना हलेन, बलेन नष्ट्वा शरणं प्रपन्ना ।
विभाति पृष्ठे यमुनेव यस्य, शङ्केऽलकाना विततेश्छलेन ॥ १० ॥
यदीयभामण्डलमध्यलग्ना न साऽलकाली शमनस्वसेयम् ।
गौरत्वकाच्छावशतस्तटाचपाकभ्रमा मज्जति लज्जितेव ॥ ११ ॥

॥ अथ चित्रमकम ॥

जयिन्नयिन् ! जय श्रीमन् ! भाविना भावुकप्रद ।
दयादो दोपदर्भौघदचक्रपो वरान्वय ॥ १२ ॥ (पूर्णकलश)

जे[1]याय यतते तेऽह्नो यावता शशभृच्छ्रियः ।
यता हि सततं ज्योत्स्ना यशः सज्जिनविश्वपाः ॥ १३ ॥ (अर्द्धभ्रमः)

जे[2]हि तापरयव्यापां जन्मोपनतविष्टपाम् ।
पापनन्दिं जिनेताघपारत[3]त्वनिधेऽनघ ! ॥ १४ ॥ (छत्रम्)

जे[4]रावरीन्मनःशुद्ध्या जयन्नतनराऽनिघं ! ।
घनचञ्चद्ध्वनिर्जीयात् सुतीव्रव्रतवान् जिनः ॥ १५ ॥ (शरः)

जलधौ नौरिव ज्ञानं यस्तारयत्यवलम्बनम् ।
न तेन्द्रः स प्रभुः सिद्धिं दद्याद् विश्राणिताब्धिजः ॥ १६ ॥ (धनुः)

जनयन्ति मुदं ते श्रीजिनोद्भाविरुचिस्रजः ।
जस्तदुर्ध्यानसन्दर्भ सर्वथा ममताङ्गज ! ॥ १७ ॥ (वज्रम्)

जम्भजिद् यं स्तुते नाकी कीरो द्रुमिव तं भज ।
जराभीतोऽवतंसेन सेव्यं देवैस्तुं राजभम् ॥ १८ ॥ (शक्तिः)

जडा मनुजराज्यार्त्तियोगे वीक्षेत राशिभम् ।
भजन्ते न जिनं देवं वरेण्याङ्गं गताश्रवम् ॥ १९ ॥ (भल्लः)

जलज्वलनचौराविर्भूतं सर्वारिसम्भवम् ।
वम्भज्यते भयं यस्य नाम्ना सिद्ध्यै स वोऽस्त्वजः ॥ २० ॥

जनाय सेविनेऽम्भोजवासां देहि वृषध्वज ! ।
जवेन सारहारश्रीर्वराक्षिरुचिरक्षितः ॥ २१ ॥ (द्वाभ्यां खड्गः)

जघान योऽघमन्हाय तममानं नमाम तम् ।
तथा यस्य मतिः कान्ता शावरागगरावशा ॥ २२ ॥ (रथपदम्)

---

१ अहो प्रभो ! यशः यावता शशभृच्छ्रियः जयाय यतते यत्सम्बन्धात् तावता ज्योत्स्ना यता–उपरता इत्यर्थः । 'यम् उपरमे' (सिद्ध०) इति वचनात् ।

२ हे जिन ! पापनन्दिं जहि । किम्भूताम् ? तापरयस्य व्यापो यस्याम् । पुनः किंविशिष्टाम् ? जन्मनि उपनतं विष्टपं यया । 'इताघपार !' इतः–प्राप्तः अघपारो येन सः ।

३ पारं तनोतीति पारतन् पारततो भावः पारतत्त्वम् । तस्य निधिः, पारतत्वनिधिः तस्यामन्त्रणम् । ४ नितरां हन्तीति निघः न निघः अनिघः "निघोद्ध–सङ्घोद्घनापघनोघ्नं निमिसरप्रशस्तगणाल्याधानाङ्गासन्नम् !" (सिद्ध० ५ । ३ । ३६) इति सूत्रेण सिद्धिः ।

५ हे जन ! हे मनःशुध्या जरादरीन् जयन्, हे 'अनिघ !' 'निघा–' बृहतिका निघं वर्त्तं' इति बृहद्वृत्तिगत 'निघोद्धसङ्घोद्य' (सिद्ध ५ ३ ३६) इति सूत्रवचनात् न विद्यते निघा निघं वा यस्येति ततः सम्बोधनम् ॥

जञ्जन्यते यकृस्याङ्गयशसा श महीस्पृशाम् ।
शा त जिनेन्द्र सुशय गम्भीर नम विश्वपाम्  ॥ २३ ॥ ( मुशलम् )

जयन्त्यादिविभो पाणिकरना विजितोडुपा ।
पालका कालपा पाककम्पापाकररङ्कपा  ॥ २४ ॥ ( शूलम् )

जपामदजय येऽशुदांशुदजग कृपा ।
पातु नाभेयपादा मा पुण्येष्वाहितसौहृदम्  ॥ २५ ॥ ( हलम् )

जरागेरातुरास्तेरु स्वदथद् भिन्द्धि कामद ! ।
दम्भ दवदर दस्यु दयोद्दयदय दमम्  ॥ २६ ॥ ( चामर )

जन ! स्पृहयसि स्वेभ्यो सदसु सदयाभिमम् ।
मनसाननशीतांशु शुभ जैन नमोत्तमम्  ॥ २७ ॥ ( श्रीकरी )

जञ्जपूको[2] नतो येन तोयेश ! क्षिप सत्तम ! ।
मतसम्पन्निधे ! देव ! वन्दे मयि महोश्रिमम्  ॥ २८ ॥ ( शङ्ख )

जङ्गम स नरु भूमध्विन्न कृततम शमम् ।
मन्दारातततदातृव जिन सततसम्पदम्  ॥ २९ ॥ ( श्रीवत्स )

**एभिः सप्तदशभिश्चित्रैः स्वगुरुनामगर्भितं अष्टादशारं चक्रं सम्पद्यते ।**

अथ चक्रातिरिक्तानि चित्राणि—

जगतो हलभीराज जराभीर निहस्यज ! ।
जस्य हन्त भियो भीज अवीयो विदितोऽङ्गज  ॥ ३० ॥ ( कमलम् )

जन्तूनामभय योऽदात् त नौमीनमनहसम् ।
सन्तत ततस तापा पाता सद्मसम्मदम् ।  ॥ ३१ ॥ ( त्रिशूलम् )

नत्वा स बावबोधाय सोवम जिनमादिमम् ।
देवदेव तमेवाह सेवे देवेश्वरार्चितम्  ॥ ३२ ॥

---

१ हे प्रभो ! जयगरातुरा त्वन् भवत [illegible] –अतरन् ! तथा हे कामद ! दम्भ दवदर दस्युं भिन्द्धि । त्व किं कुर्वन् ? दयाया उदय दयते ददाति एवंविध दम दधत् ।

२ हे तोयश ! तो–लक्ष्मी अयते इति तोय स चासौ ईशश्च तस्यामन्त्रण हे तोयेश ! छय तन्तु सन्तान इति वचनात् । येन कारणेन अहं जञ्जपूकोऽस्मि गर्ह्य जपतीति जञ्जपूकः पठप सदाचारे इति वचनात् अपि नतस्तन मयि अग्रिमं मह–ज्योतिर्लक्ष्मीं क्षिप–स्थापय ! हे आप्तसम्पन्निधे !

वासवाभिनत ! तन्तनोति ते स्तोत्रमत्रभवतः श्रियां पदम् ।
दम्भदोषरहितेन चेतसा मारुदेव ! वरवीरकुञ्जर ! ॥ ३३ ॥
तस्य हस्ते पदं श्रीविभो ! शाश्वतं, तच्चिदुद्रेकसश्रीकनित्योत्सवम् ।
तत्त्वतः पण्डितः सोऽञ्जसा यः स्तुते ते पदाब्जं विवेकी जिनाधीश्वर ! ॥ ३४ ॥
न लभेत स पामरलोकदरं रसिकं तमियर्ति च कामगवी ।
भिषजं भवभाविगदे भयदं दमवान् य इमं विनमत्यजरम् ॥ ३५ ॥ (तोटकवृत्तम्)
वामकामद्विषा जय्यमीष्टे वसुं सुप्रभास्योडुपो जन्तुकल्याणकृः ।
सङ्गसञ्ज्ञं जहौ यश्च तं वीवधं धर्मदः पातु मां यत्नतो नाभिजः॥ ३६ ॥
भजे भवन्तं गुणरत्नसिन्धुं धुतक्रुधं सुन्दर ! ते तदन्तम् ।
तं तीर्थराजं जवनाघपङ्ककम्पप्रपञ्चाजजवं हरन्तम् ॥ ३७ ॥
वारां निधिं धिक्कृतकर्मपङ्क ! करोपि धेनुक्रममध्यवन्धुम् ।
धुर्यांहसं संसृतिनामधेयं यतीन्द्र ! विश्राणिततत्त्ववार ! ॥ ३८ ॥
भवत्स्तवनवर्ण्या स्याद् विना भाग्यं मितालक ! ।
कवेः कस्य कला कम्रा कर्मपङ्ककरा कल ! ॥ ३९ ॥
भदन्तं दन्तिदन्ताभकीर्तिं नम्रोस्यशावभम् ।
भग्नं भवभयं भद्रं भज भव्याऽभयो भव ॥ ४० ॥
इत्थं चामरयुग्मबन्धमधुरच्छत्रस्तवोरुस्रजा
श्रीमन्नाभिनराधिराजतनयं भक्त्युत्सुकोऽपूपुजत् ।
विश्वव्यापककीर्ति ' **कीर्तिविजय** ' श्रीवाचकाधीशितुः
शिष्योऽयं ' **विनयो** ' नयोज्ज्वलमतिः श्रेयः श्रियां सिद्धये ॥ ४१ ॥
[ एतस्य सप्तदशचित्रगर्भितस्य चक्रस्य तदन्येषां च त्रयाणां
चित्राणां स्थापनाश्चित्रपट्टादवसेयाः । ]
इत्थं स्तुतो यः प्रथमो जिनेन्द्रः
सुरासुरैः खेचरभूचरेन्द्रैः ।
युगादिकाले व्यवहारचर्या-
महाल्ताकन्दलनैककन्दः ॥ ४२ ॥

इति श्रीऋषभदेववर्णनम् ।

स्वरिनश्रिया सन्ततिमि दुकान्तिर्निरस्तवान्ति स तनोतु शान्ति ।
यदङ्घ्रिपद्मे प्रणताऽमराली धत्ते मरालीपटलीविभूषाम् ॥ ४३ ॥
सुवर्णशालत्रयशालितस्य चतुर्मुखी ससदि यस्य भाति ।
चतुर्दिगुत्पन्नजनावनाय चतुष्टयी चन्द्रमस किमेषा ॥ ४४ ॥
क्षणक्षणे भाविविभावनाय यस्योच्छलन् राजति पाणिपद्म ।
नृत्यद्विजित्यौद्धुरमारवीर तूणीरमेतन्ननु विश्वभर्त्तु ॥ ४५ ॥
येनातिशौर्यार्जिजमासवस्तै क्रीता तदानीं ननु कीर्त्तिकन्या ।
साऽद्यापि बालेव परिभ्रमन्ती चित्रं न केषा हृदि चर्करीति ॥ ४६ ॥
कपोतपोतावनहेतुयोगादुपार्जितो य शुभकर्मपिण्डः ।
स चक्रिसीर्थङ्करऋद्धिलब्धो बभूव यस्य प्रतिमू प्रचण्ड ॥ ४७ ॥
गर्भस्थितेनाऽपि हि येन जज्ञे विघ्ना समस्ता भुवनेषु निघ्ना ।
प्राभातिकार्कान्तरितोऽपि किं वा नार्कस्तम स्तोममपाकरोति ॥ ४८ ॥
अपोहति स्मोदरमन्दिरोऽपि प्रत्यूहमङ्गीहितकल्पवृक्ष ।
हन्तु गज गर्भगतोऽपि सिंह केनोत्सहेतोर्जितगर्जितोम ॥ ४९ ॥
यन्नाममन्त्रस्मरणेन नैव गदापदा स्यु समदा कदापि ।
आस्तिक्यवाक्यश्रवणक्षणे वा दृष्टैव शान्तिर्विषभृद् विषाणाम् ॥ ५० ॥

तौ च — वृषभमृगवराङ्कौ ध्वस्तसंसारपङ्कौ
कनककमलका ती शा तश्र्मारिता ती ।
त्रिभुवनजनगेयौ मारदेवाचिरेयौ
नुतिविरचनयुक्त्या भूरिभक्त्या प्रणम्य ॥ ५१ ॥

इति महोपाध्यायश्रीकीर्तिविजयगणिशिष्योपाध्याय —
श्रीविनयविजयगणिना श्रीपरमगुरूणा प्राभृतीकृते
आनन्दलेखनाम्नि लेखप्रबन्धे 'स्वस्तिश्री
अमुकजिन प्रणम्ये'ति प्रथमावयव-
व्यावर्णनरूपश्चिप्रचम
त्कारनामा प्रथमो-
ऽधिकार ।

## अथ श्रीपरमगुरु–तपागच्छाधिराजचरणतामरस–पवित्रतरश्रीस्तम्भतीर्थनगरवर्णनम्—

नन्दीश्वरस्वीकृतवापिकानां यदीयवाप्यः कलयन्ति लीलाम् ।
उत्तुङ्गशृङ्गप्रतिबिम्बदम्भादङ्गीकृता केशयशैलशीलाः ॥ ५२ ॥

आलापयन्तीव समेतवाला यदीयवाप्यश्चलवीचिमालाः ।
स्मिताननाः फेनततिच्छलेन खगारवैः स्वागतवाक्यवत्यः ॥ ५३ ॥

शशाङ्कभित्तादमलां स्वभित्तिं विभाव्य तं जेतुमना महौजाः ।
यियासतीवोर्ध्वमदभ्रकान्तिर्मरुत्पथे वप्रभटो यदीयः ॥ ५४ ॥

वृत्ताकृतौ सारसुधातिरेके जयोद्धुरे वीक्ष्य यदीयदुर्गे ।
स्वतोऽतिरिक्तां परिखां विभाव्य शङ्के शशाङ्कः परिधिं दधाति ॥ ५५ ॥

अथवा—

यदीयदुर्गप्रचुरप्रतापाऽऽविर्भूततापातिशयादिदानीम् ।
शङ्के शशाङ्कः परिधिच्छलेन शेते यदीयान् जलकुण्डमध्ये ॥ ५६ ॥

अनेकशीर्षं विविधायुधाढ्यं यद्दुर्गमायान्तमवेक्ष्य चन्द्रः ।
भीत्याहयत् स्वं तदहो प्रसिद्धिरद्यापि सा ज्योतिषशास्त्रसिद्धा ॥ ५७ ॥

अथवा—

कलङ्कपङ्काविलमस्थिराङ्गं मिथ्याभिमानादुदयन्तमिन्दुम् ।
वीक्ष्य क्रुधा वप्रविभुर्विचक्रे वपुर्महद्भीममनेकशीर्षम् ॥ ५८ ॥

इति वप्रः ।

विभान्ति यत्रोपवनानि वल्लीघनानि वेल्लत्पवनानि नूनम् ।
नृत्यन्ति नित्यं विशदास्पदाप्तिप्रीत्या कृतार्थीकृतसम्पदानि ॥ ५९ ॥

उत्तुङ्गतालादितरूज्ज्वलेन पुरं यदुद्ग्रीविकया वनेन ।
विलोक्य हर्षादिव शीर्षमूहे विधूयते वायुधुतिच्छलेन ॥ ६० ॥

वनी यदीया नवनीतगौरैः सुमैः समन्तादवनीतलस्थ ।
पूजां सृजन्ती निजमातृभक्त्या व्यक्तीकरोति स्वकृतज्ञभावम् ॥ ६१ ॥

तालादिसाला गगनाभ्रमा सम्र्मेरा कि गिरमुर्द्गिरन्ति ।
भो नन्दनादीनि वनानि यूयं गतानि किं मेरुमिमामपास्य ॥ ६२ ॥

धिग् धिक् समृद्धिं भवतामुदारमन्दारसारामपि दानशून्याम् ।
एतानि धन्यानि वनानि यानि फलर्द्धिमि स्वैरुपकुर्वते क्ष्माम् ॥ ६३ ॥

युग्मम् ।

यत्रावटाग्र इतिकारिणोऽध्वारघट्टमालाजपमालिकाढ्या ।
तुलां दधत्युद्भटमन्त्रिकाणां निदाघघर्मोग्रपिशाचजैत्रा ॥ ६४ ॥

इति वनवर्णनम् ।

पुरं यदष्टादशवर्णशोभावभासितं सद्गतसार्द्धवर्णम् ।
दिवं जयत्यत्र किमद्भुतं स्यात् कृच्छ्रजय्यो बलिना बलेन ॥ ६५ ॥

वर्णागमोऽर्थातिशयेन योगो यत्रास्ति नो वर्णविपर्ययश्च ।
न वर्णलोपो न च तद्विकारस्तथापि यत्रेष्टपदार्थसिद्धिः ॥ ६६ ॥

विनोपसर्गं बहुधा तु यत्र धातोर्विशुद्धा द्विविधार्थसिद्धिः ।
पुरं कथं व्याकरणस्य जैत्रं पुरं नयत्वित्यमलान्वयार्थम् ॥ ६७ ॥

लसद्बहुव्रीहि सकर्मधारयं मृतं च तत्पुरुषैर्बहुद्विगु ।
सदाव्ययीभावमविप्रयोगवद् द्वन्द्वं तथाप्यङ्ग न यत्समासवत् ॥ ६८ ॥

अविप्रयुक्तानपि विप्रयुक्तान् धनान् जनान् यन्नितरां बिभर्ति ।
अद्वन्द्वनामापि लसद्द्विरास्पिद्वन्द्व विशाल च सुरालयेव ॥ ६९ ॥

यस्यातिवानुर्यैवत पुरस्य पुरं स नाकोऽपि पशूयमान ।
युक्तं ततस्तस्य कृतं कवीन्द्रैर्गुणागतं गौरिति गोत्रमत्र ॥ ७० ॥

अथवा—

निरीक्ष्य यस्या पुरतो भयेन स्पृष्टा सरादा जम्भो निमग्नाम् ।
अवाप्यनाथे तविणोऽपि नूनं सुधीर्दधौ गौरिति नामधेयम् ॥ ७१ ॥

कदाप्ययं न ततोऽन्वितार्थ्यं यत्राऽस्ति 'नारङ्गसरो' ऽभिरामम् ।
गर्जन्निमज्जद्गयकुम्भरोहसिन्दूरपूरारुणितोर्मिमालम् ॥ ७२ ॥

शङ्के सपङ्केरुहपद्मनीरं निरीक्ष्य सुस्वादु सरो यदीयम् ।
क्षीरोदधिं कलमलुब्धस्य क्षारोदधेः प्राघुणतामियाय ॥ ७३ ॥

पयोनिधिर्यामधिगम्य लीलानिकेतनं सुन्दरमिन्दिरायाः ।
स्थाने नरीनृत्यत इत्यपत्यप्रेमप्रकर्षो हि जने गरीयान् ॥ ७४ ॥

मदङ्गजायाश्चपलस्वभावमपाकरोदित्यधिकादजर्यात् ।
संलग्नवेलावलयच्छलेन यामालिलिङ्गेव मुदा पयोधिः ॥ ७५ ॥

पुरा मुरारिप्रमुखाणि पुत्रि ! स्थानानि तान्यस्थिरयोज्झितानि ।
अथेदृशं प्राप्स्यसि नेति गर्जन् पयोनिधिः शिक्षयतीव लक्ष्मीम् ॥ ७६ ॥

वार्धिर्जगादेन्दुमिदं प्रमादादभ्रङ्कपोदस्ततरङ्गहस्तैः ।
स्थिरस्वभावास्ति तवाऽत्र जामिर्मुधा किमु भ्राम्यसि तां दिदृक्षुः ? ॥ ७७ ॥

द्वीपान्तरोत्तीर्णविचित्रवस्तुभृतानि यस्मिन् वहनानि भान्ति ।
इह स्थिताया निजनन्दनायाः कृतेऽम्बुधिप्रेषितढौकनानि ॥ ७८ ॥

इति समुद्रः ।

यत्रानिशं भूरिविलासिलोकैरुत्कीर्णकृष्णागुरुधूपधूमैः ।
विधोरधो श्यामलितं तलं यल्लक्ष्मेति लोकैः परिचिन्त्यते तत् ॥ ७९ ॥

यत्रापणश्रेणिषु सञ्चितानि मुक्ताप्रवालानि निजानि वीक्ष्य ।
वेलामिषाद् वारिनिधिः स्वदेहमास्फालयन् भित्तिषु पूत्करोति ॥ ८० ॥

यत्र च—

यदा यदा तुङ्गविहारशृङ्गे निषेदतुः श्रान्तिभिदेऽर्यमेन्दू ।
तदा तदाविःकुरुतः स्वकीयं खगस्वभावं प्रथितप्रभावौ ॥ ८१ ॥

प्रसह्य चेतोहरतामुपेतां यदा यदा यां परिहृत्य याति ।
तदा तदा सत्वरनुन्नरथ्यो दिनानि भानुर्लघयत्यवश्यम् ॥ ८२ ॥

यदा यदा यां समया समेति तदा तदा तैः कुतुकप्रकारैः ।
व्यग्रारुणानुन्नतुरङ्गराजिर्दिनाधिनाथो महयत्यहानि ॥ ८३ ॥

यत्रेभ्यगेहाश्चलकेतुचेलाः सूर्येन्दुतापाङ्कगदापनुत्यै ।
ध्रुवं व्यवस्यन्ति सदोपकारिलोकानुषङ्गात्ततथास्वभावाः ॥ ८४ ॥

यत्रार्हतां वेश्मसु तुङ्गशृङ्गसुवर्णकुम्भावलिषु प्रविष्टः ।
क्रमाद् भ्रमन् राजति भानुमाली दमीयभिक्षाक इव प्रभायै ॥ ८५ ॥

यत्रातितुङ्गार्हतमन्दिरेषु शिरःस्फुरत्केतुमरुत्तरङ्गैः ।
रथ्यादय. खेऽपि पथि श्रमघ्नीं महा महारामरतिं लभन्ते ॥ ८६ ॥
यत्रान्वहं श्रीजिनमन्दिरेषु पूजासु नृत्यन्मनुजानुवृत्त्या ।
नृत्यन्ति शृङ्गस्थितकेतवोऽपि समीरसम्पातधुतिच्छलेन ॥ ८७ ॥
इत्यादृयान् यत्र बहून् विलोक्य सकेतुघटीन् गगनाभलग्नान् ।
नेशुर्विमानानि भयेन नूनं नाद्यापि दृग्गोचरमापतन्ति ॥ ८८ ॥

इति जिनमन्दिरेभ्यमन्दिरवर्णनम् ।

उपाश्रया यत्र वसन्मुनीशस्वाध्यायनिर्घोषनिरस्तदोषा ।
नयन्ति पोषं निपुणाह्वितोषं धर्मश्रमानायकराजधान्य· ॥ ८९ ॥
उपाश्रयेषूर्ध्वमधित्यकानां लसन्ति सोपानपथं श्रयन्त ।
मुमुक्षव. किं मद्धचक्रचारमिच्छन्ति संवादयितुं जिनोक्तम् ॥ ९० ॥

अथवा—

यत्रासकृन्नित्यमधित्यकामारोहावरोही मुनय सृजन्त ।
सुस्थां गुणस्थानकपङ्क्तिमन्धामारोढुमभ्यासमिव श्रयन्ति ॥ ९१ ॥
व्याख्यागवाक्षे यदुपाश्रयस्य विभान्ति येऽत्यन्तनता वितानाः ।
नित्यं गुरूपासनपुण्यधुका मुक्तामया स्युः किमिवात्र चित्रम् ॥ ९२ ॥
विराजते यत्र सदोपदेशावातायनः काञ्चनकोशशाली ।
सिंहासनं शक्रमिवाशु जेतुं युद्धे कुधेवोर्जितसन्नवर्मा ॥ ९३ ॥

इत्युपाश्रयवर्णनम् ।

क्षणक्षणे यत्र सभा विभाति निभातिसम्यक्समहेभ्यसभ्या ।
कल्पद्रुमाणां पटलीव पुष्पफलोग्रवल्लाऽऽमोदमयी वदान्या ॥ ९४ ॥
गुरुक्रमाब्जोपनमन्महेभ्यकुमारकोटीरमणिप्रभाभि· ।
अकृत्रिमा चित्रिततोरणस्रक् चिरीयते कस्य मनो न यत्र ! ॥ ९५ ॥
यत्रार्यलोकान् विलसद्विवेकान् सुरासुराकम्पितधर्मबुद्धीन् ।
निरीक्ष्य मन्ये बहुमन्यमाना न नाकिन. क्ष्मां चरणैः स्पृशन्ति ॥ ९६ ॥
उपासिका यत्र पवित्रगात्रा स्वसच्चरित्रा निशदागमज्ञा· ।
सुरूपनीलोन्नतिमत्तकस्था शेषां त्रिभङ्गीमपहस्तयन्ति ॥ ९७ ॥

नानाविभूषाकुसुमावदाताः कौसुम्भवासः किशलालिरम्याः ।
दानप्रधानाः करचारुशाखाः स्वर्वेल्लितुल्याः किल यत्र नार्यः ॥ ९८ ॥
अस्मन्मुखैर्निर्जित एष चन्द्रो लज्जाजडो यास्यति कुत्र रङ्कः ।
इतीव चेलान्तरितास्यपद्माः पद्मोपमा यत्र चरन्ति वध्वः ॥ ९९ ॥
यत्राङ्गना काञ्चनभङ्गगौर्यः स्नेहोद्धता मन्दिरदीप्तिदिक्षाः ।
पतत्पतङ्गायितकामिनेत्राः कलामधुर्दर्पकदीपिकानाम् ॥ १०० ॥
अधर्म एको नगरे गरीयानस्मिन् सदा पुण्यपरायणेऽपि ।
पतन्ति यद्दक्षमृगेक्षणानां कटाक्षकुन्तैर्दलिता युवानः ॥ १०१ ॥
यत्रेभ्यगेहेषु चलापि लक्ष्मीः श्रेयोमहाशृङ्खलजालबद्धा ।
गन्तुं न शक्ता सितमर्कटीवालिन्देष्वटन्ती प्रकृतिं पिपर्त्ति ॥ १०२ ॥

इति स्त्रीपुंसवर्णनम् ॥

प्रथीयसी यत्र महाट्टवीथी निशीथिनीमप्यतिथीभवन्ती ।
तमोमयीं दीपकदीप्रपङ्क्तिर्ज्योतिर्मयी कान्तिमयीं करोति ॥ १०३ ॥
यत्रापणाली विधवां निशां यद् व्यभूषयद्दीप्रमणिप्रभाभिः ।
परोपकारप्रवणाङ्गिसङ्गादहो सुसंसर्गगुणो गरीयान् ॥ १०४ ॥

अथवा—

यत्रापणश्रेणिषु दीपतेजः शशाङ्ककान्ता नितमामुपास्ते ।
चिरन्तनं तज्जडकान्तसङ्गाज्जातं जडत्वं किमपाचिकीर्षुः ॥ १०५ ॥
यत्रोरुधर्मोत्सवतूर्यनादकोलाहलै रथ्यतुरङ्गमानाम् ।
सन्त्रासविद् गच्छति दक्षिणेन रविः पुरीं यामथवोत्तरेण ॥ १०६ ॥

इति चतुष्पथवर्णनम् ।

तत्रेदृशि श्रीमति सर्वशत्रुवित्रासिभूमीश्वरशासितायाम् ।
विष्वङ् नभोमण्डलचुम्बिलुम्बिलताम्रवत्यां पुरि ताम्रवत्याम् ॥ १०७ ॥

इति महोपाध्यायश्रीकीर्त्तिविजयगणिशिष्योपाध्याय-
श्रीविनयविजयगणिना श्रीपरमगुरूणां
प्राभृतीकृते आनन्दलेखनाम्नि
लेखप्रबन्धे 'श्रीमति तत्रे' त्य-
वयवव्यावर्णनरूपोऽलङ्कार-
चमत्कारनामा द्वितीयो-
ऽधिकारः ।

गृहे गृहे यत्र च कामगव्यो गृहे गृहे यत्र पयः सुधाश्च ।
हरीश्वराणां गणना न यत्र कथं न नाकादतिरिच्यते तत् ? ॥ १२२ ॥

उत्तालहिन्तालतमालतालरसालसालावलिशालितान्तम् ।
नितान्तमन्तः करणं जनानां प्रसाधयत्यध्वचितश्रमाणाम् ॥ १२३ ॥

श्री ' **हीरसूरीश** ' वचोऽतिरक्ताः सुश्रावका यत्र वसन्ति भक्ताः ।
दानप्रधानाः श्रुतिसावधानाः सम्यक्त्वरत्नं विशदं दधानाः ॥ १२४ ॥

यत्रास्तिकानां हृदयालवाले धर्मद्रुमः पुष्यति पुष्पमाली ।
समृद्धयः सद्मनि तत्फलानि पुष्पाणि नानाभरणानि देहे ॥ १२५ ॥

किं वर्णयामश्च गुणान् यदीयान् श्रीपूज्यपादैरनुभूतपूर्वान् ।
वस्तुष्वदृष्टेषु हि वर्णनं स्यात् प्रायश्चमत्कारकरं कवीनाम् ॥ १२६ ॥

तथापि दिङ्मात्रमुदाहरामः फलं कवित्वस्य मुदा हरामः ।
ऋते कवित्वादफलं वहेम प्राज्ञत्वमेतत् तु यदाह हेमः ॥ १२७ ॥

तथा च **श्रीहेमसूरिपूज्यपादाः**—

" वक्तृत्वं च कवित्वं च विद्वत्तायाः फलं विदुः ।
शब्दज्ञानादृते तन्न द्वयमप्युपपद्यते ॥ "

इति **वारेजा**पुरवर्णनम् ।

ततः पुराद् **द्वारपुरा**भिधानाद् द्वारोपमाद् द्रंगपरीसरस्य ।
सानन्दमुल्लासपयोदवृष्टिप्रोद्भूतरोमाञ्चमनोरमाङ्गः ॥ १२८ ॥

उत्कण्ठया प्रस्फुटया पटीयान् हर्षाश्रुनीरप्लुतनेत्रपत्रः ।
पवित्रगात्रः पृथुभक्तिभिश्च विनम्रमौलिर्विनयोदयेन ॥ १२९ ॥

ललाटपीठीघटिताञ्जलीकस्त्रिधा विशुद्धिक्षमितव्यलीकः ।
औत्सुक्यतो विस्मृतशेषकृत्यः सदाश्रवः श्रीगुरुनित्यभक्तः ॥ १३० ॥

अनादृतावाससुदर्शनाख्यासंख्यामिताऽऽवर्त्तकवन्दनेन ।
प्रणम्य सम्यग् **विनयो** विनेयो विज्ञप्तिपत्रं वितनोति भक्त्या ॥ १३१ ॥

चतुर्भिः कलापकम् ।

यथाक्रमं चात्र—

मार्तण्डमूपागमनो सर्वेऽप्यथ तदमेसरवैनतेयः ।
चक्रेऽस्तम पङ्कमपास्ततारापाषाणखण्ड शुचिकुङ्कुमाक्रम् ॥ १३२ ॥

आच्छाद्य गम्भीरतमोऽम्बरेण निर्जे प्रसुप्तेषु जगत्सु नेता ।
अर्के करै कर्कशकर्करामै प्राबोधयत् स्वस्वनियोगहेतो ॥ १३३ ॥

जगत् तम श्यामलयत्यगौर रक्तश्च रक्तं कुरुते पतङ्ग. ।
यो यादृश स्यादपर स्वसङ्गात् स्वतादृश वै न चिरात् करोति ॥ १३४ ॥

सद्वृत्तता भङ्गमनीषुषा य कष्टप्रसक्तो न चिर हि तिष्ठेत् ।
इतीव वक्तु पुनराहरोह पूर्वाद्रिसिंहासनमशुमाली ॥ १३५ ॥

अथवा—

जगदुपद्रुत्य कुत प्रनष्ट तम क्व तारा शशिन सहासा ।
इतीव पूर्वाद्रिशिरोऽधिरुह्य प्रद्योतन पश्यति कोपताम्र ॥ १३६ ॥

ध्वस्ता समस्ता रिपवस्तमासि क्षुण्णानि सूरेण किलैककेन ।
गुणानुरागादिति दिग्वृगास्य क्षिपन्ति बालातपकुङ्कुमानि ॥ १३७ ॥

तत्र प्रतिप्रासरुदीतभानौ भानौ सुराधीशदिगद्रिसानौ ।
सा नौरिवोदेति सभा सभार्यसभार्यसभ्या सुहृतैकलभ्या ॥ १३८ ॥

तत्र— षड्भिः कुलकम् ।

स्वाध्यायत स्वायतिसुन्दरस्य व्यनक्मि 'जीवाभिगम'स्य सूत्रम् ।
अर्थापयामि प्रथितोत्तरादेर्नृ ना प्रशस्ताध्ययनस्य वृत्तिम् ॥ १३९ ॥

श्रीशासनोत्रत्यविभावनानां प्रभावनाना भवन कदाचित् ।
सानन्दमानन्द समारितकाना नन्द्या अनिन्द्याश्च महामहौघा ॥ १४० ॥

शुद्धोपधानोद्वहने प्रधानशिवोपधानप्रतिमं जनानाम् ।
अध्यापन चान्तिपदा सुयोगक्रियाङ्कतिः शोधनबोधने च ॥ १४१ ॥

एवं च सर्वेष्वपि धर्मजेषु कार्येषु निष्पत्तिवधूवरेषु ।
क्रमागतं पर्व सुपर्वसेव्य श्रीवार्षिकं पर्वशिरः किरीटम् ॥ १४२ ॥

तत्रापि—

दिनानि भानुप्रमितानि जन्तुजीवातुजीवाभयडिण्डिमश्च ।
तिलन्तुदानामथ मैनिकानां क्रियानिवृत्तिः सुकृतप्रवृत्तिः ॥ १४३ ॥

स्नात्राण्यमात्राणि जिनालयेषु पूजाः पुनः सप्तदशप्रकाराः ।
विहायितं गायनयाचकानां सद्भावनाभावननर्त्तनानि ॥ १४४ ॥

क्षणैः क्षणाढ्यैश्च निधानसङ्ख्यैरर्थापनं कल्पसुबोधिकायाः ।
विचित्रवादित्रपवित्रनृत्योत्सवेन तत्पुस्तकपूजनं च ॥ १४५ ॥

चतुर्थषष्टाष्टमपञ्चकाष्टाहिकादिकानां तपसां विधानम् ।
क्रमेण चैत्यप्रणतिः सगीताविगीतसङ्गीतकयुग्महौघैः ॥ १४६ ॥

अखण्डखण्डापुटनालिकेरप्रभावना स्मेरतराब्दिकीह ।
कृता प्रतिक्रान्तिरनेकलोकैः साधर्मिकाणां क्षमणं मिथश्च ॥ १४७ ॥

अनेकपक्वान्नसुपाकशाकघृतामृतस्यन्दिदलैः सनैः (?) ।
पयःप्लुताभिः पृथुकप्रथाभिर्विशालशालिस्फुटदालिभिश्च ॥ १४८ ॥

ततः परं गौररसाक्तकूरैस्ताम्बूलदानैर्बहुमानपूर्वम् ।
सधर्मणां वेश्मसु भोजनानि स्त्रैणस्य पौंस्नस्य च नैकवारम् ॥ १४९ ॥

महामहै रेवमनेकधर्मकर्म प्रथाशालिभिरारुरोह ।
संसिद्धिशालाशिखरं सुखेन तद्वृद्धमप्यद्भुतमेतदत्र ॥ १५० ॥

सम्प्रत्यपि प्रीतिकराणि धर्मकर्माण्यविघ्नान्युपयन्ति सिद्धिम् ।
सर्वत्र तत्रोत्तमपूज्यपूज्यपादप्रसादोदय एव हेतुः ॥ १५१ ॥

इति महोपाध्यायश्रीकीर्तिविजयगणिशिष्योपाध्याय-
श्रीविनयविजयगणिना श्रीपरमगुरूणां प्राभृतीकृते
आनन्दलेखनाम्नि लेखप्रबन्धे 'उदन्त'
व्यावर्णनरूपस्तृतीयोऽधिकारः ।

---

## अथ श्रीपरमगुरुगच्छाधिराजवर्णनम्—

रूप यदीय मदनोऽनुकर्तुं हराक्षिवह्नौ स्वतनु जुहाव ।
अनङ्गता प्रत्युत सोऽथ लेभे नाभाग्यभाज फलिनोऽभियोग　　॥ १५२ ॥

शान कुजार्त बत पुण्डरीकमिन्दु कलङ्केन मलीमसश्च ।
स चामदर्शी मसितानुषङ्गी केनोपमान लभता तदास्यम् ?　　॥ १५३ ॥

तैस्तैस्तपोभिर्भुवमामदर्शो जातोऽपि लोके जनवर्णनीय ।
पृष्ठे मुखे चेत् सदृशोऽभविष्यन् तदा यदास्योपमतामयास्यत्　　॥ १५४ ॥

मुख मुख तर्जितवद् यदीय तत परिच्छिन्नमृदुस्वभावम् ।
व्यग्र समग्र ग्रसते शशाङ्क स सिंहिकाया वितनुस्तनूज　　॥ १५५ ॥

यदा शरत्पार्वणशर्वरीश विधिर्विधत्ते घुसृणावलिप्तम् ।
तदा लभेताऽपि न वा लभेता सद्वन्द्यसत्मुखनप्रतिमाम्　　॥ १५६ ॥

सूर स शूरी बहुशो यदेष स्नेहेन सेहे ननु शाणपीडाम् ।
इन्दुर्जडोऽथ यदि ता सहेत तदा लभेतैव यदास्यदास्यम्　　॥ १५७ ॥

निरूप्य रूप रुचिचारु यस्य काम निकाम कतम स्तवीति ।
तत स विश्वोपरि दूनचेता सर्वं शरैस्ताडयतीति मन्ये　　॥ १५८ ॥

यश　प्रसराभिभूतो यस्य प्रशान्तोप्ररुचोऽर्यमेन्दू ।
पकर्षगो मन्त्रयत समानापमानदु खौ ननु　मासि　　॥ १५९ ॥

यत्प्रतापविजितोऽनलोऽविशद् युक्तमश्ममणिनाम्पवृत्तिषु ।
वाडवाग्निवपले किमकार्षी नम्मुर्जलधिनारिदरम्　　॥ १६० ॥

श्रेयोनिधानं च युगप्रधानोपमानमानं दितथ यन्तोरम् ।
न क स्तुते यं जगदर्चनीयाऽभिधानमुद्दामगुणासमानम्　　॥ १६१ ॥

चित्रं यदीये हृदये समस्तो माति स्म सिद्धान्तगिरिद्विरोढा ।
अचिन्तनीया कृपयोऽथवा किं नापोप्यदधि स्वमदादयस्य　　॥ १६२ ॥

यदीयगाम्भीर्यजित स तोयनिधिर्भयात् तीरनरत्नवोष ।
गुण गुम्भ युक्तमितावियोगी परानितानामियमेव रीति　　॥ १६३ ॥

सुधां नगारिः कमलां मुरारिर्जह्नुः सुराश्चोत्तमधेनुमुख्यम् ।
शेषं गभीरत्वमपाहरद् यो मन्येऽम्बुधिस्तल्लवणावशेषः ॥ १६४ ॥
भवेद् गभीरत्वमथाम्बुधौ चेत् कथं मुधा गर्जति सारशून्यः ।
विचारसारं तत एतदेव येनैव जह्रेऽस्य गभीरभावः ॥ १६५ ॥
यदीयवाणी विजिताऽभिभूता स्पर्द्धा भवत्या न ममेति वक्तुम् ।
पातालमुत्तालगतिर्विवेश सुधा हि दिव्यं ननु कर्तुकामा ॥ १६६ ॥
सुवर्णरूपापि यदीयवाणी लोही कृपाणीव विपादवृक्षम् ।
समूलमुन्मूलयतीति चित्रं न कर्कशो वा कतमः स्वकृत्ये ॥ १६७ ॥
दधाति दिव्याय विधोः सुधापि यद्वाक्यमीतायसमुष्णगोलम् ।
न मन्यसे चेदवलोकयोर्ध्वं नादर्शकार्यं करकङ्कणे स्यात् ॥ १६८ ॥
यद्गीर्जितोऽपीक्षुरदक्षचेता दधौ शिखां मूर्ध्नि वृथाभिमानात् ।
यन्त्रेषु निष्पीड्य ततोऽस्य सारमादीयते क्रुद्धतमेन धात्रा ॥ १६९ ॥
स्पर्धावतीं यद्वचसा सितां तां स्त्रीत्वादवन्ध्यां स विधिर्विधिज्ञः ।
नित्यं शलाकाप्रविभिन्ननक्रां पुरे पुरे चारु करोत्यटन्तीम् ॥ १७० ॥
धियश्चतस्रो हृदये यदीये कीर्त्तिः श्रुता दिक्षु च तावतीषु ।
धर्मं चतुर्धोपदिशन् जनानामहो सुचातुर्यमदो यदीयम् ॥ १७१ ॥
सिद्धान्ततत्त्वानि नतानि तानि स्थितानि हार्नि लवतो लभन्ते ।
यस्मिन्नतः स्मेरतरा प्रसिद्धिर्युक्तं जगत्यां धुरि कोष्टबुद्धेः ॥ १७२ ॥
जातेन येन प्रथिता बभूव श्रीरोहनाम्नी नगरी वरेण्या ।
वैडूर्यरत्नेन विदूरभूमिर्हीराङ्कुरेणेव च रोहणाद्रिः ॥ १७३ ॥
श्रीवन्तवंशोधिगतप्रशंसः प्रदीपिकादण्डसुहृत् कथं नो ।
यच्छृङ्गसङ्गी भुवनप्रकाशमङ्गीकरोति प्रतिराट् प्रदीपः ॥ १७४ ॥
शृंगारदे यं तनयं प्रसूय रत्नप्रसूकीर्त्तिमधाद् वधूषु ।
यथेह रिक्तास्वपि चारुमुक्ता शुक्तिर्यशः शुक्तिषु मौक्तिकानाम् ॥ १७५ ॥
प्राग्वाटवंशे हि पुटानि सप्त स्थाने यदीदृग् नररत्नपात्रम् ।
[illegible] सर्वो हि रत्नस्य करोति यत्नम् ॥ [illegible] ॥

औन्नत्यधैर्यादिसमग्रसारमादाय मेरुर्विजित स येन ।
शृङ्गप्ररूढाङ्कुरमारदम्भात् तृणानि मूर्ध्ना वहते दरिद्र ॥ १७७ ॥
यस्योपदेशस्य रसात्रिपीय मार्द्वीकमाधुर्यमदस्य जैत्रान् ।
जना स्वकर्णाञ्जलिभि स तृष्णां छिन्दन्ति संसारतपर्तुपूर्तिम् ॥ १७८ ॥
सूरोऽपि दूरोज्झितपापताप सोमोऽपि नो स्वीकृतदोष एव ।
सुमङ्गलोऽप्यङ्ग गतो न रक्तो बुधोऽपि सौम्योऽपि न मित्रदस्यु ॥ १७९ ॥
गुरु सुराणामपि नास्तिको नो न केकराक्ष कविरप्यनस्त ।
शनैश्चरो नाप्यसितो न मन्दो यथात्मना सद्वृतिसैंहिकेय ॥ १८० ॥
केतुं न के तुङ्गगुण वदन्ति प्रमोदहेतुं द्वयमप्यमन्दम् ।
एव विरोधोपचितोऽपि नित्यं यथाविरोधी विदितो द्विधापि ॥ १८१ ॥
यदतिशायिगुणाभिजयेन्दुभिर्गमयितुं भुवमेति नवाम्बुद ।
शरदि याति पुनर्गतसङ्गरत्रिजगतीहसितो भसितोज्ज्वलः ॥ १८२ ॥
लसति यस्य रजोहरणं करे रजनिजानिकरोत्करसुन्दरम् ।
दयितया दयया प्रणयार्पित विततकेलिसरोजमिवोज्ज्वलम् ॥ १८३ ॥
सकलजीवकृपालयपालक बहुलपक्षभयादभयाधमाम् ।
मुखपटीमिषतः शशिन कला इति वदन्ति नु य श्रुतिसङ्गता ॥ १८४ ॥

अथ शेषचित्रमक्रम —

नाकपाडकुटकाकरतीरे सामला कडकडा जडपाडी ।
लोकपाटति सुसाटनमूर्तिर्यस्य कीर्तिरिह हंसवलक्षा ॥ १८५ ॥

( भाषाचित्रम् )

सुष्टुभालतुहिनद्युतिभित्त यस्य लुण्टति विचक्षणचित्तम् ।
यस्य कीर्तिसुरशैवलिनी च या पवित्रयितुमुक्तमिहान्यत् ॥ १८६ ॥

( गुप्तक्रियाकम् )

यस्य नामपरमोत्तममन्त्रादश्नुते गुरु सुख जनराजी ।
यस्य लोचनचमत्कृतिनुन्ना सम्रयासघनवासमुपास्ते ॥ १८७ ॥

( गुप्तकर्तृकम् )

आस्यमस्य कमलादमलाक्षं चन्द्रपङ्कजरुचामभिभूत्या ।
यस्य शस्यगुणमत्र च कर्म सक्रियापदमुदीरितमेव ॥ १८८ ॥

( गुप्तक्रियाकर्मकम् )

यस्सुमाशुगशरैरपीडितस्तर्जिताखिलसुरासुरशक्रैः ।
पण्डितैर्नरवरैरधुनोक्तं शेषवाच्यमवधेहि सुबुद्धे ! ॥ १८९ ॥

( गुप्ताव्ययक्रियाकम् )

प्रातरेव परमं पुरुषेषु यं नमस्यति नमस्यपदाब्जम् ।
स क्षणेन कुशलाकलय त्वं युज्यते यदिह तत्तु मयोक्तम् ॥ १९० ॥

( गुप्तान्वयम् )

यस्यास्यकान्तेः किमसि प्रतिष्ठां लिप्सुर्वराकाऽनिशमुज्ज्वलायाः ।
त्यजेतरेच्छां सुखमद्धि भिक्षां बुधात्रसम्बोधनमस्ति गूढम् ॥ १९१ ॥

( गुप्तामन्त्रणम् )

किमर्ज्यते दक्षभृशोद्यमेन सा या न स्थिरेति प्रथिता भुवि श्रीः ।
प्रणम्य यं संसृतिवारिधिं तर व्याप्तं बुधास्मिन् करणं सुगुप्तम् ॥ १९२ ॥

( गुप्तकरणम् )

महायशोभासुररम्यमूर्तेर्येनानतौ यस्य पदौ जनेन ।
सत्याकृतिस्तेन शिवोद्भवाय दत्तात्र गुप्तं बुध ! सम्प्रदानम् ॥ १९३ ॥

( गुप्तसम्प्रदानम् )

मा गा विषादं भज सुप्रसादमानन्दनं पश्य तदाननेन्दुम् ।
मिथ्यात्वरूपाद् विरमाऽतिनिन्द्यादत्रास्त्यपादानपदं पदान्तः ॥ १९४ ॥

( गुप्तापादानम् )

कस्य भाग्यभरितस्य तनूजा यस्य चित्तमहरत् स्वरसेन ।
शीलसारघनसारसुगन्धेरुत्तरं कथितमेव वयस्य ! ॥ १९५ ॥

( गुप्तसम्बन्धम् )

रे पुष्पायुध ! माऽऽयुधं चपलय श्रान्तिं वृथा मा कृथाः
पापव्यापमपाकुरुष्व कुमते ! किं वा छलेनाऽमुना ? ।
रे दूरीभव मोहसन्ततमृषावादिस्वभावं त्यज
ध्वस्ताज्ञानतमोभरेऽत्र विबुधाधारं सुगुप्तं वद ॥ १९६ ॥

( गुप्ताधारम् )

तता ता तात्ततिं तात ! ततोऽतीततुतेऽततिं ।
तुतात्तां तात्ततेऽतान्त तेति ततुतुती तत ॥ १९७ ॥
( एकव्यञ्जनचित्रम् )

नमामीनममानानाममानमुनिमाननम् ।
नाम्नु नाम नमेमोना नुन्नामो नूनमुन्नु ॥ १९८ ॥
( द्विव्यञ्जनचित्रम् )

सदाफारानुहारा च महासुजगभूषणा ।
स्तौति य य - सुन्दरा तस्य मन्दिरे ॥ १९९ ॥
( बिन्दुच्युतकम् )

कमलकलकरवदन ! सततहृतमदमदन ! ।
नमदमर ! गतसमर ! जय सजय ! गणधर ! ॥ २०० ॥
( एकस्वरचित्रम् )

सदा सदानन्दनिधानदान तनोतु नेता सतत नतानाम् ।
तदा सनासीनसनातनीत नीतेनिताधीतिधनाधुनेन ॥ २०१ ॥
( दन्त्यस्थानचित्रम् )

सिद्धा तयारां निषिमृद्धशुद्धिं लभ्या समा गुरुगौतमेन ।
महेम हेमाम्बुजगर्भगौरदेह मुदे हन्त मुनीनमेनम् ॥ २०२ ॥
( अताल्व्यव्यञ्जनचित्रम् )

विसारि सारसे सार ससारोरुसुराश्रये ।
सुरेश्वरहरिं सेवे हीरसूरिशिशो शयम् ॥ २०३ ॥
( अवर्गचित्रम् )

मदनमानधनापनुद दमानुपमवित्तमनेकपगामिनम् ।
भजत भो जनता ! कठिनापदामिदमखण्डगुण गणभूपतिम् ॥ २०४ ॥
( अनवर्गचित्रम् )

श्रीबन्सनन्दन वन्दे शान्तरा रविसुन्दरम् ।
दयाविधिघन मेनाभीनमशुदिव विशाम् ॥ २०५ ॥
श्रीवशामितनाराच रविवन्दितम नमे ।
विदेद सुघन भीरु याद शावशुभिनदम् ॥ २०६ ॥
( द्वाभ्या तुरगपदम् )

इत्थमनेकविवेकिजनैर्यैश्चित्तचमत्कृतिकोविदचित्तैः ।
वाङ्मनसाविलतापगमाय पूजितपादयुगाः सुकविवैः ॥ २०७ ॥

तथा च—

सुदर्शनाः सारसुधागिरो ये ऋद्ध्यब्जिनीनर्ममरालकल्पाः ।
शरत्समानाः कुशलेन्दुदीप्तौ जगत्त्रयीशान्तिकृतावधानाः ॥ २०८ ॥
सुमेरुधीराः शशिवामरौघैर्नता नयाढ्या विमलाशयाश्च ।
ज्येष्ठश्रियः सद्गतिहस्तिमल्लाः कुमारशौर्याः सुकुमारदेहाः ॥ २०९ ॥
क्षेमद्धिवृद्धौ कुशला विवेकचन्द्रोज्ज्वलाः प्रीतियुता दयायाम् ।
चारित्ररत्ने कृतयत्नयोगाः कल्याणलक्ष्मीकुमुदेन्दुकान्ताः ॥ २१० ॥
तैस्तातपादैर्गुणशीतपादैर्गतप्रमादैर्घनधीरनादैः ।
स्वाज्ञान्तिपत्कौशलशालिपत्रप्रसादनेरेप शिशुः प्रमोदः ॥ २११ ॥
त्रिधा त्रिसायं प्रणतिर्मदीयाऽवधारणीया महनीयपादैः ।
सा चाऽनुपूर्वा व्रतिनां प्रसाद्या श्रीपूज्यसेवाविधिपावितानाम् ॥ २१२ ॥

तत्रापि— सुदर्शनेत्याद्यकवित्वमध्ये विशेषणैः सूचितनामकानाम् ।
बुधाग्रणीनां परयोर्द्वयोश्च संसूचितानां गणिनां मुनीनाम् ॥ २१३ ॥

किञ्च— समानकनकच्छटाप्रकटकान्तिदेवेन्दुभि-
नेताञ् जिनवचोऽन्वितान् विनतवार्द्धिनेमीश्वरान् ।
इमैर्गुरुविशेषणैरभिहितान्वयाः साधवो
नमन्ति गणभूपतीन् नमति चाऽत्र सङ्घोऽखिलः ॥ २१४ ॥

इति महोपाध्यायश्रीकीर्तिविजयगणिशिष्योपाध्याय-
श्रीविनयविजयगणिना श्रीपरमगुरूणां प्राभृतीकृते
आनन्दलेखनाम्नि लेखप्रबन्धे 'तैस्तातपादैः'
इत्याद्यवसरप्राप्तश्रीगुरुवर्णनरूपः स्वर१
व्यञ्जन२ स्थानगतिनियन्त्रणच्युत-
गुप्तादिशेषचित्रचमत्कारनामा
चतुर्थोऽधिकारः ॥

## अथ लेखप्रशंसा ।



दूरेऽप्यदूरे इव यो जनाना ददाति मित्रप्रियसङ्गसौख्यम् ।
मनोविनोदी विरहापनोदी लेखस्तु साक्षाद् वरलेख एव ॥ २१५ ॥

स श्यामवर्णो रसपूरपूर्ण सुहृन्मन केकिकृतप्रमोद ।
चिन्तातपक्लान्तिनिराकरिष्णु कथ न लेखो जलदोपमान ? ॥ २१६ ॥

स्वगोविलासै प्रियचित्तपद्मान् विकासयंश्च भ्रमणस्वभाव ।
असंशय संशयतामसघ्नो लेखः कथ सूर्यसहोदरो नो ? ॥ २१७ ॥

अनेकवर्णोत्तमरत्नपङ्क्तिविराजितो भूरिसदर्थशाली ।
मुद्राङ्कित स्वादररक्षणीयो लेखोऽश्नुते कोशगृहस्य लक्ष्मीम् ॥ २१८ ॥

भूपालवद् यो व्यवहारचर्या प्रवर्तयेत् सद्गुरुवच्च शास्ति ।
विश्रम्भपात्र प्रियमित्रवच्च लेख कथ सर्वगुणास्पद नो ? ॥ २१९ ॥

लेखस्य सप्त प्रभेदाः—

स सप्तधा लेख उदीरितो वै पृथक् पृथक् कार्यफलोपदर्शी ।
व्यापारलेख १ कुसुमेषुलेखः २ स्नेहस्य लेख ३ स्फुटरोषलेख ४ ॥ २२० ॥
शोक ५ प्रमोद ६ प्रभवौ च लेखौ यो धर्मलेख, स च सप्तमा स्यात् ।
तत्रादिमो यो व्यवहारिलोकै सलिख्यते कामिजनैर्द्वितीय ॥ २२१ ॥

भवेत् तृतीय स्वजनैर्मिथो यस्तुर्यो विपक्षक्षितिनायकाभ्याम् ।
स पञ्चमो य स्वजनार्तिशसी षष्ठो विवाहादिषु लिख्यते य ॥ २२२ ॥

अथ पुन सप्तम एव लेखो लेखेषु सर्वेष्वपि सार्वभौम ।
पदे पदे पुण्यफलोदयेन यत परत्रेह च शर्मसिद्धि ॥ २२३ ॥

स्वस्तीतिबीजं जिनवर्णन च मूल पुरीवर्णनमेव शाखा ।
पुष्पाण्युदन्ता गुरुवर्णन च फलं लसल्लेखसुरद्रुमेऽस्मिन् ॥ २२४ ॥

लेखो हि प्राय पिशुनेभ्यो रक्षणीय सज्जनेभ्यश्च दर्शनीय

इति तयो स्वरूपलेशो लिख्यते—

सतां स्वभावोऽयमिह प्रमोदवन्तो निरीक्ष्यान्यकवेः कवित्वम् ।
इन्दुः किमक्ष्णां भवति स्वकीयो हर्षोऽतिहृद्येष्विति तन्निसर्गः ॥ २२५ ॥

ते वल्लभाः स्युर्भुवनेषु सन्तः कुर्वन्ति येऽन्यस्य गुणप्रकाशम् ।
केषामभीष्टः स समीरणो नो यः सौरभं सौमनसं व्यनक्ति ॥ २२६ ॥

ब्रवीति दोषानथ योऽन्यदीयान् दुष्टः स शिष्टोऽपि भवेदनिष्टः ।
दुर्गन्धलेशं प्रथयन् समीरो द्विष्टो न जीवातुरपीह विश्वे ॥ २२७ ॥

खलः कवित्वस्य विभाव्य दोषान् यथा प्रसन्नो न तथा गुणौघान् ।
लभेत नो सुन्दरमन्दिरेण मुदं यथाहिर्विलवीक्षणेन ॥ २२८ ॥

किं दुर्जनानामिह याति येऽन्यश्लोकानुपश्रुत्य विषादिनः स्युः ।
गृह्णाति वार्कः किमु कौशिकानामान्ध्यं यदस्योदय एव तेषाम् ॥ २२९ ॥

प्रागेव विद्वेषतमोनिरुद्धबुद्धीक्षणाः किं परिभावयन्ति ।
गुणान् कवित्वस्य यथा दिवान्धो वेवेक्ति भानोर्ननु कौशिकः किम् ? ॥ २३० ॥

कवित्वरत्नस्य विशुद्धिभाजो गुणप्रकर्षः खलसङ्गतः स्यात् ।
दृष्टात्मदर्शे भसितानुलेपात् शुद्धिस्तथाक्ष्णोः किमु कज्जलेन ? ॥ २३१ ॥

निर्दूषणे शालिनि काव्यरत्ने कुर्यादनार्योऽपि हि दुर्जनः किम् ? ।
सुवर्णपर्यङ्कतलेऽतिसान्द्रे क्व मत्कुणौघो लभते प्रवेशम् ॥ २३२ ॥

कदाप्यनाभोगकृतः कवित्वे दोषो भवेत् सोऽपि गुणो गरीयान् ।
विनाऽमुना स्यात् कतमः प्रकारो मुदे गुणागृह्यधियां खलानाम् ॥ २३३ ॥

स्वचित्तगर्वोद्धुरतोच्छ्रितेन निस्सारमेकेन पदेन मत्ताः ।
दिधीर्षवो ये कविताभ्रभारं तेभ्यो नमस्टिट्टिभसोदरेभ्यः ॥ २३४ ॥

केचिच्चिदंशाधिगमेन मत्ताः खलास्तदन्ये प्रभुतामदात्ताः ।
शेषास्त्वविज्ञा बत कः कवीनां श्रमक्रमं द्रक्ष्यति लब्धलक्ष्यः ? ॥ २३५ ॥

किमेतया प्रस्तुतचिन्तया वा सन्त्येव केचित् सरलाः पुमांसः ।
ज्ञानप्रभुत्वोत्तमतात्रिवेणीसङ्गोपमा भूषितभूमिभागाः ॥ २३६ ॥

इति स्वल्पं सज्जनानां मया निरुद्धं न कुतोऽपि हेतोः ।
कादम्बरीचम्पुकथादिकारैः प्राच्यैर्बु धैर्नवमतो न्यदर्शि ॥ २३७ ॥

अथ स्वौद्धत्यपरिहारः—

श्रीहेमचन्द्रादिकवीश्वराणां पुर स्फुरेद् यः कवितामदो म ।
तार्क्ष्यस्य पक्षौ समुदीक्ष्य साक्षात् स मक्षिकाणामिव पक्षगर्व ॥ २३८ ॥

तैस्तै सुधीभिर्बहुभि स्तुतान् व स्तोतु गुणान् कोऽहमतीवमुग्ध ।
अस्पष्टमप्यर्भकवाक्यजाल प्रिय गुरूणामिति तु प्रयत्न ॥ २३९ ॥

स्तोतुं प्रवृत्ता भवत कवीन्द्रास्ततोऽहमप्यत्र विधौ समुत्क ।
निरीक्ष्य पोतौस्तरतः पयोधौ तत्रोत्सुकं नो किमु शुष्कपर्णम् ? ॥ २४० ॥

भवद्गुणौघाम्बुनिधौ निमग्ना कवीश्वराश्चित्रमह तु तीर्णः ।
सम्बन्धगन्धादिति युक्तमेव यथाम्बुधेर्वारिणि काष्ठखण्ड ॥ २४१ ॥

मुनीन्द्र ! यन्नो रचितो मयाऽयं प्रमोदपूर्णान् गुणिनो निरीक्ष्य ।
बाले स्वबुद्ध्या रचितासु रेणुमयीषु लीलाभ्यचातुरीषु ॥ २४२ ॥

अज्ञानभावेन यदत्र चम्प्वे 'मानन्दलेखे' लिखितं मया यत् ।
शोध्यं च बोध्यं च तदात्मबुद्ध्या बुधा ! मयाऽयं रचितोऽञ्जलिर्वः ॥ २४३ ॥

पर्याप्तमभ्यर्थनयाऽथवाऽऽर्यो भद्रा किल प्रोज्ज्वलनस्वभावा ।
अभ्यर्थितो केन च पुष्पदन्तौ तौ शारदौ चोक्षयितुं सरासि ॥ २४४ ॥

गुरु प्रसन्नो यदि सौम्यदृष्टि क्रूरग्रहैर्वक्रतमै किमन्यैः ।
जहात्यतेऽसौ किल दोषलक्ष ज्योतिर्विदामप्ययमेव पन्था ॥ २४५ ॥

तत प्रसन्नैर्गुरुभिर्विधाय शिशौ कृपालैरमनीदृशोऽपि ।
स्मर्य कदाचित् समये जनोऽय विशेषतः श्रीजिनदर्शनादौ ४६ ॥

मनो मदीय तु यथा सरोजे सौरभ्यमौत्यमिवाऽम्बरादौ ।
दुग्धे जलं रौप्यमिवाप्सु वह्नावुष्णत्वमिन्दाविव कौमुदी च ॥

१ 'वेदृतोऽन्यय[illegible]वीचडीयुष [illegible] द्व० २ । ४ । ९८ ) इति
२ 'हनो [illegible] ञ्वे' ( सिद्ध० ४ [illegible] ) इति मूलसूत्राणां
विधस्यैत्तनात् चेतीयते [illegible] साधु ।

माधुर्यमिक्षाविव.वः क्रमाब्जे तथा गतं तन्मयतां ततः किम् ।
लिखामि यच्छ्रीगुरुनामधेयमाहं नमाम्यार्हतपादपद्मान् ॥ २४८ ॥
युग्मम् ॥

संवत्सरे वार्द्धिनिधानचन्द्रकलामिते (१६९४) बाहुलमासि दिव्ये ।
मनोरथो मे फलितस्तु धन्यत्रयोदशीसञ्ज्ञतिथौ बभूव ॥ २४९ ॥

यावद् धरित्रीफलके सुमेरुः शङ्कुर्निखातो दिनमानकारी ।
प्रतिष्ठितस्तावदयं प्रबन्धो जीयात् प्रबुद्धश्रवणाध्वनीनः ॥ २५० ॥

कल्याणमारोग्यमभीष्टसिद्धिः समृद्धिलब्धिश्च गुणप्रसिद्धिः ।
महोन्नतिः कीर्तिततिः प्रतीतिः सङ्घेऽनघे स्ताद् वितततेति भद्रम् ॥ २५१ ॥

पूज्यार्हद्भक्तभट्टारकततितरुणीचन्द्रकान् भव्यलेखा–
राध्य श्रीश्रीशत्रुश्रीनतपद 'विजयानन्द'सूरीशपूज्यान् ।
ध्येयप्राधान्यधन्यांस्तपगणनृपतीन् व्यक्तविज्ञप्तिपत्रं
नामस्मृत्येकतानः शिशुरिति नगरे स्तम्भतीर्थेऽढुढौकत् ॥ २५२ ॥

इति महोपाध्यायश्रीकीर्तिविजयगणिशिष्योपाध्याय–
श्रीविनयविजयगणिना श्रीश्रीपरमगुरूणां प्राभृती–
कृते आनन्दलेखनाम्नि लेखप्रबन्धे लेखप्रशंसा
सुजन दुर्जनस्वरूप व्यावर्णनरूपो दृष्टान्त-
चमत्कारनामा पञ्चमोऽधिकारः सम्पूर्णः
॥छ॥ सम्पूर्णश्चायमानन्दलेखनामा
लेखप्रबन्धः ।

| संवत | पृ. प्र. |
| --- | --- |
| १२७ | ३-६ |
| ११६४ | ४९-६७, ५३-८३ |
| ११८४ | २२-२७ |
| ११९७ | ५२-७९ |
| ११९८ | ८०-१२३ |
| ११९९ | ६९-१०७ |
| १२११ | ९३-१५८ |
| १२१२ | १५-२१, ३५-४१ |
| १२२१ | १२-१५ |
| १२२७ | ७४-११२ |
| १२४२ | ८२-१२८ |
| १२४४ | ५०-७१ |
| १२४७ | ५५-९०, ६१-९१ |
| १२४८ | ८४-१३९ |
| १२५१ | ४२-४७ |
| १२५४ | ६६-१०४ |
| १२५५ | ८२-१३० |
| १२५८ | ८०-१२४, ८४-१४०, ८४-१४१ |
| १२६१ | ५४-८५ |
| १२६३ | ५३-८२ |
| १२६४ | ४८-६० |
| १२६५ | ६-१० |
| १२७४ | ७९-११७ |
| १२७५ | ३८-४४ |
| १२७९ | ८३-१३२ |
| १२८० | ९४-१६१ |
| १२८३ | ८२-१२९ |
| १२८४ | ५२.७८ |
| १२८५ | ८७-१५२ |
| १२८६ | ४९-६४ |
| १२८७ | ५४-८७ |
| १२८८-८५-१४४ | |
| १२९० | ५०-६८, ५९-७०, ८१-१२६ |
| १२९१ | २५-३० |
| १२९२ | २५-३२, ४९-६५, ५-९, ५४-८८, ५३-८४ |

| संवत. | पृ. प्र. |
| --- | --- |
| १२९३ | ४८-६१, ८४-१४२ |
| १२९४ | ४६-५१, ५३-८२ |
| १२९५ | २८-३७, ४१४६, ४७५६, ८३-१३५ |
| १२९६ | १९-२५, ५१-७५, ९६-१४७ |
| १२९७ | ४२-४६, ५३-८१ |
| १२९८ | ४६-५१, ४८-६२, ८४-१३६ |
| १२९९ | १८-२३ |
| १३०० | ३६-४२, ४९-६३ |
| १३०१ | २५-३१, ४७-५५, ४८-५८ |
| १३०३ | ४६-५१, ४९-६६ |
| १३०६ | १४-१७, ५९-९२, ७१-१११ |
| १३०७ | ४६-५१, ७८-११४ |
| १३०८ | १०-१४, ५३-८० |
| १३०९ | १-१, ४४-५० |
| १३१० | ८३-१३३ |
| १३१३ | ८०-१२१, ८७-१५१ |
| १३१८ | १६-२२ |
| १३१९ | ८०-१२० |
| १३२२ | ४१-४५ |
| १३२४ | ५५-९३ |
| १३२५ | ५१-७२, ५६-९५ |
| १३२६ | ७९-११९, ८८-१५४ |
| १३२७ | ५१-७३, ९५-१६३ |
| १३२८ | ९५-१६३ |
| १३३० | २९-३८ |
| १३३३ | ४८-५९ |
| १३३४ | ३-४ |
| १३३५ | ८०-१२२ |
| १३४३ | ९४-१६१ |
| १३४४ | ८७-१५० |
| १३४७ | ५८-९२ |
| १३४९ | ४४-४२, ५०-६९ |
| १३५१ | ८८-१५३ |
| १३५२ | ३३-३९ |
| १३५३ | ५८-९६ |

| सवत | पृ | म |
|---|---|---|
| १३५४ | ५८ | ९६ |
| १३६५ | २४ | २८ |
| १३७० | ८४ | १३७ |
| १३७७ | ९४ | १६२ |
| १३७८ | २८ | ३६ |
| १३८२ | ९३ | १५९ |
| १३८३ | १४ | १८ ५४ ८६ |
| १३८४ | ७० | १०८ |
| १३८७ | ५६ | ९४ |
| १३९१ | ५२ | ७७ |
| १३९४ | ८४ | १३८ |
| १४१२ | ९४ | १६० |
| १४२० | ६५ | १०२ |
| १४२१ | ३-७ | |
| १४२६ | ७० | ११० ८५ १४६ |
| १४२७ | ४-८ | |
| १४३४ | ८५ | १४३ |
| १४३७ | ६७ | १०५ |
| १४४० | ७० | १०७ |
| १४४१ | ६५ | १०२ |
| १४४२ | ६४ | १०२ ६६ १०२ ८६ १४९ |
| १४४३ | ५९ | ९४ ७९ ११६ |

| सवत | पृ० | म |
|---|---|---|
| १४४४ | ७८ | ११६ |
| १४४५ | ३८ | ४४ ४७ ५६, ५२-७५ |
| १४४६ | ६२ | ९७ |
| १४४७ | २६ | ३३ |
| १४५० | ८१ | १२७ |
| १४५२ | ८२ | १३१ |
| १४५५ | ७७ | ११४ |
| १४५७ | ८६ | १४८ |
| १४५८ | ६२ | ९८ |
| १४७३ | ८३ | १३३ |
| १४७४ | ६८ | १०६ |
| १४७८ | १६ | २१ |
| १४७९ | ६६ | १०४ |
| १४८० | १५ | २० ७० १०९ |
| १४८१ | ७ | ११ ६० ९५, ६७-१०४ |
| १४८३ | ६० | ९५ |
| १४८५ | ८५ | १४५ |
| १४८६ | ६३ | ९९ |
| १४८७ | ८८ | १५५ |
| १४८९ | १९ | २५ ७७ ११३ ७९ ११८ |
| १४९२ | ६१ | ९६ ६३ १०१ |
| १४९८ | ९ | १३ |


## ग्राम नगराणि


ग्राम पृ म

अणहिल पत्तन ३ ४ ३ ७ ६८ १०६ ९४ १६०

अणहिल पाटकपुर १२ १५ ४१ ४५ ५३ ८३ ७४ ११२ ७९ ११६

अणहिलपुर ६० ९६

अणहिल द्रंग १५ १९

अणहिल्लनगर १५ २१

अणहिलपाटक २२ २७ ४९ ६६ ४९ ६७ ५४ ८५ ७९ ११९ ८४ १३९ ८४ १३९ ८९ १५६

अणहिल्ल पाटकनगर ९५ १६३

अर्बुद दुर्ग २६ ३४

अजयमेरु (पृथ्वीपुर) ८० १२३

ग्राम पृ म

आघाट १ १

आघाट दुर्ग ५२-७८

आशापल्ली ५८ ९२ ६१ १०७ ८७-१५१

उज्जयिनी ५९ ९३

ऊज्जयन्त ८७ १५३

कर्नाट १५ २१

कांचिपुर १५ १९

काशहृदनगर २६ ३४

खेरडक नगर ५९ ९४

गंभूक ८३ १३३

घोघानगर ६० ९५

ग्राम पृ. प्र.

चडडापल्लीपुरी १२-१५
चित्रकूट ९४-१६१
चंद्रावती ३९-४५, ८३-१३२
जावालिपुर ८-१२, ९१-१५७
जिणोर १६-२१
जंघराल ४२-४६
टींवापुर १५-१९
डुंगरपुर १५-२०, ६३-९९, ७९-११९, ८४-१५६
दर्भवती ४२-४७, ९३-१५८
दयावटपुर ४३-४८
दयावाय ५०-६८
दधिपद्र ७२-११२
दियवर ७०-११०
देवगिरी १४-१८, ५४-८५
देवकुलपाटक ६९-१०६
देवपत्तन ८१-१२६, ८७-१५२
द्विगुणवप्र ६-१०
धवलक्कनगर २५-३१, २६-३४, ४८-५८, ४८-५९, ८०-१२१, ८८-१५४
धंधाणक १३-१६
नगर १५-१९
पत्तनपुर ५९ ९४, ७२-११३, ८०-१२०, ८२-१३०, ८२-१३०
पत्तननगर ६३-१०१
पत्तन ७१-११०, ८०-१२२
पावकाचल ९-१३
पिल्लाहिका ३-५
पंचकुल ७८-११५
प्रल्हादन पत्तन ९-१२
प्रल्हादनपुर ४७-५५, ४९-६४, ७९-११७, ८८-१५३,
घलासर १५-१९
भीमपल्ली ९१-१५७, ९५-१६३
भृगुकच्छ ५५-९०, ८४-१३६
माडवाडाग्राम ८४-१३८

ग्राम पृ. प्र.

मुंकुशिका ५४-८५
मेरुमहादुर्ग (वाग्भट्ट) ९४-१६३, ९५-१६३
वउणा (मेदपाटमंडले) २८-३६
वटपद्रपुर ४२-४७
वर्द्धमाननगर ६६-१०४
वटकूपक ८५-१४४
वीजापुर १९-२५-२५-३२, ४६-५४, ४८-६२, ४९-६३, ५०-६८, ५१-७२, ५१-७३, ५३-८४, ५४-८७, ५८-९६-९१-१५७
वीजापुरपत्तन २८-३७, ४७-५७
वेलाकुल ५०-७०
शत्रुंजय १५-१९, ८७-१५३
पयरोद्र ५१-७४
सपादलक्ष १५-२१
सभ्वोग्राम ७१-१११
सुरत्राणपुर ९-१३
सुदर्शनग्राम ८२-१३०
सोपारकपुर ९-१३
सोर्जित्रिक १५-१९
संडेरक ५७-९६
स्तंभतीर्थ ९-१३, १५-१९, १८-२३, ३८-४४, ४७-५६, ४८-६१, ५०-७०, ५२-७६, ५६९४, ६२-९७, ७७-११४, ८३-१३३, ८३-१३५, ८४-१३७, ८६-१४८, ८६-१४९, ८८-१५४
स्तंभतीर्थनगर ६४-१०२, ६८-१०५
स्थंभनपुर ६५-१०२
स्वर्णगिरि ८७-१५३, ९२-१५७
श्रीमाल ७०-१०८
श्रीपल्ली ८४-१३९
हडाद्रनगर ६-११, ६६-१०४
हडाद्रपुर ४१-४५, ५६-९५
हमीरपत्तन ९५-१६३
हार्थीद्रण १५-१९

आचार्यादि पृ. प्र.

गुण प्रभ ४-८
गुणभद्रसूरि ४-८
गुणरत्नसूरि ७१-११०, ६६-१०२
गुणाकर ८३-१३५

च

चक्रेश्वरसूरि १२-१५, २४-२७, २८-३६, ७४-११२
चंद्रकीर्ति ३५-४१
चंद्रसेखरसूरि ७१-११०
चंद्रप्रभसूरि ७८-११५

ज

१ जगच्चंद्रसूरि २७-३५, ४२-४६, ४३-४८
२ जयदेवसूरि ५९-९३
३ जयचंद्रसूरि ७६-११३
४ जयतिलकसूरि ८६-१४८
५ जयप्रभसूरि ५६-९५
६ जयानंदसूरि ४८-६०, ६२-९८, ६५-१०२, ६८-१०५, ७०-१०७, ७१-११०
७ जिनचंद्रसूरि ७-१२, २६-३४, ८८-१५३, ८९-१५७, ९०-१५७
८ जिनदत्तसूरि -७-१२, ७-१२, ९०, १५७
९ जिनदेवसूरि ८४-१३६
१० जिनप्रबोधसूरि ८८-१५३
११ जिनपति ७-१२ ९३-१५७
१२ जिनरत्नसूरि ७-१२, ९१-१५७
१३ जिनवल्लभसूरि ७-१२, ९०-१५७
१४ जिनसुंदरसूरि ७६-११३
१५-१ जिनशेखरसूरि ९०-१५७
१५-२ जिनश्वरसूरि ७-१२, ७-१२,७-१२, १५-२०, ६३-९९-८९-१५७, ९१-१५७

द

१ देवकुमारमुनि २९-३७, ४७-५७
२ देवगुप्तसूरि ३३-३९
३ देवचंद्रसूरि ४६-५९, ८५-१४४
४ देवचंद्र ५-९
५ देवेन्द्रसूरि ७१-११०
६ देवेन्द्रसूरि १९-२५,३८-४३, ४२-४६, ४३-४८, ४५;५०, ४७-५५, ५१-७५, ५४-८७
७ देवप्रभगणि ७१-११०
८ देवप्रभसूरि ११-१४
९ देवभद्रगणि २५-३२, २८-३७, ४५-५०,४७-५५ ४७-५७, ५३-१४, ५४-८७, ६९-१०६
१० देवमंगळगणि ७१,११०
११ देवशेखरगणि ७१-११०
१२ देवसुंदरसूरि ६-११, १५-२०,२६-३३, ३८-४५ ५५-९१, ५९-९४, ६२-९७, ६२-९८
१३ देवसूरि ३०,३८, ५९-९३, ६६-१०४, ८३-१३४ ६५-१०२ ६७;१०४

ध

१ धनेश्वरसूरि ८२-१३०
२ धर्म्मकीर्ति ८५-१४४
३ धर्मघोषसूरि ३५-४१,४३-४८,५१-८२, ७१-११०
४ धर्मसूरि ८७-१५०

न

१ नेमिकुमारमुनि २९-३७, ४७-५७
२ नेमिचंद्र २६-३४
३ नेमिप्रभसूरि ७८-११५

प

१ पद्मचंद्र ५२-७७
२ पद्मतिलकसूरि ७१-११०
३ पद्मदेवसूरि ५-९, ३९-४५-५५-९०
४ पद्मप्रभसूरि ८७-१५१
५ परमचंद्रगणि ८२-१२८
६ परमानंदसूरि ४०-४५, ७१-११०, ७४-११२, १२-१५
७ प्रद्युम्नसूरि ५-९, ११-१४, २१-२५
८ प्रभानंदसूरि ५२-७७, ५६-९५
९ प्रसन्नचंद्रसूरि ६९-१०६
१० पुण्यतिलकसूरि ३-३
११ पूर्णचंद्र ५-९
१२ पृथ्वीचंद्रसूरि ५२-७७

आचार्यादि पृ प्र

भ

१ भद्रेश्वरसूरि ११ १४
२ भावदेवसूरि ५६ ९५
३ भुवनचंद्र ८५ १५४
४ भुवनरत्न ३० ३८
५ भुवनसुंदरसूरि ७६ ११३

म

१ मतिप्रभ ४-८
२ मलयकीर्ति २५ ३२ २९ ३७ ४३-४७ ५४-८४
३ मलयचंद्र ८५ १४६
४ महेन्द्रसिंहसूरि ५३-८२
५ माणिक्यसूरि ७० १०८
६ मानीश्वरसूरि २१ २६
७ मानतुंगसूरि ५९ ५९
८ मानदेव ५९ ५९, ११ १४
९ मुनिचंद्र ८४ १४१
१० मुनिदेवसूरि ८३ १३४
११ मुनिसुंदरसूरि ७६ ११३

य

१ यतिशेखरसूरि ३ ३
२ यशोदेवसूरि २४ २७ २६ ३४
३ यशःप्रभसूरि १२ १५
४ यशोभद्रसूरि २१-२६
५ यशोभद्र ३६ ४७
६ यशोवादिसूरि ११ १४

र

१ रत्नप्रभाचार्य ११ १४ १८ २३ ४१ ६५
२ रत्नसिंहसूरि ५८ ९६, ५८ ९२
३ रत्नाकरसूरि १२ १५, ८२ १२९ ८४ १३७
९४ १६२

ल

लक्ष्मीतिलकसूरि ९१ १२७

व

१ वयरसेणसूरि ७० १०८
२ वादिदेवसूरि ७० १०८
३ विजयचंद्र २० २६, ४५-५० ४६-५४ ४७-५५
५४-८७ ५६ ९५
४ विजयसिंहसूरि ३९ ४५, ५५ ९०
५ विद्यानंद ४३ ४८ ७१ ११०
६ विनयकीर्ति ८७ १५१
७ विमलप्रभसूरि ७१ ११०
८ विमलसूरि ३५ ४१

श

१ शांतिसुंदरगणि १६ २१
२ शांतिमुनि २१ २६
३ शालिसूरि २८ ३६, ३६ ४२ ८८ १५६
४ शालिसूरि २१ २६
५ शीलभद्रसूरि ८७-१५०
६ श्रीप्रभसूरि २४ २७

स

१ सर्वदेवसूरि ११ १४ ८४ १३८
२ सर्वदेव २६ ३४ ८९ १५६
३ सिद्धसेनसूरि ३३ ३९
४ सिद्धसूरि ३३ ३९
५ सुमतिश्वर ३६ ४२
६ सोमकलश ८५ १४४
७ सोमतिलकसूरि ६५ ९६, ६२ ९७ ६६ १०२
७१ ११०
८ सोमप्रभसूरि ७१ ११०
९ सोमसुंदरसूरि ६ ११ १०-१३ ६० ९५, ६१
९६, ६३ १०१ ६७-१०४ ६९ १०६

ह

१ हरिप्रभुसूरि ५६ ९५
२ हर्षकीर्तिगणि ५८ ९६
३ हेमचंद्राचार्य ५० ६७ ५९

क्ष

क्षमार्षि ३६ ४२

ज्ञ

ज्ञानसागरसूरि ७१ ११०

## साध्वीजी


साध्वीजी पृ. प्र.

अपराश्री ७२-११२
अजितसुंदरी गणिनी ८४-१४०
चारित्रश्री ५-९
चारित्रलक्ष्मी ७०-१०८
जगतश्री ५-९
जगसुंदरगणिनी ६-१०

साध्वीजी पृ. प्र.

पद्मलच्छि ७०-१०८
महिमागणिनी ८१-२२५
रुदयश्री ५-९
ललितसुंदरगणिनी ८०-१२१
विजयलक्ष्मी ७०-१०८


---

## श्रावककुलादि


श्रा.कुल. पृ. प्र.

ओकेशवंश ८-१२, ९-१३, १४-१९, २५-२९, २६-३३, ४७-५६, ५५-८९, ७८-११६, ९२-१५७
गुर्जरवंश २४-२८
धर्कट २-२, ५-९, १०-१४, १२-१६, २१-२६, ३६-४२
नागर ३-५
नागपुरीयश्रावक ४७-५५
परीक्षिवंश ४-८
पल्लिवाल १६-१९, २३-२५, ५८-९३, ६४-१०२,

श्रा.कुल. पृ. प्र.

प्राग्वाट ३-८,६-११, २३-२७, २९-३८, ३१-३९, ३५-४१,३७-४३, ३९-४५, ५१-७५, ६२-९८, ८१-१२७
प्राग्वाटवंश २५-३१, २७-३५, ५७-९६, ६६-१०४,
महीरोलनगोत्र २८-३६
वरहुडीया १९-२५, ५०-६८
श्रीमालवंश ६-१०, २८-३६, ३३-४०, ७४-११३,
श्रीमाल १२-१६, ५८-९२
श्रीमालकुल ६०-९५


---

## श्रावको


श्रावक पृ. प्र.

अर्जुन ४-८
अजित १३-१६
अभयकुमार १८-२४, ४५-५०
अभयपाल २२-२६, ७०-१०७
अरपति २२-२६
अरसिंह २५-३२, ५४-८४
अभय ३१-३९
अजयसिंह ३१-३९
अमरसिंहक ४३-४८
अमरसिंह ५७-९६
अरिसिंह ५८-९२
अणंतो ७०-१०७
अभयड ८४-१३९

श्रावक पृ. प्र.

आनंद ३-५
आशा ६-१०, ३०-३८
आशाधर १०-१४, ३२-३९, ७३-११२
आसल ११-१४
आशाचंद्र १२-१५
आम्रदेव १३-१६, ५९-९३
आम्रदत्तदेव १३-१६
आशाधर १५-१९
आशदेव १९-२५, ३४-४०
आसपाल २५-३२, २९-३७, ४८-५७, ५२-७७, ५४-८४, ५४-८७
आमसिंह २६-३३
आल्हाक २९-३८

श्रावको पृ. प्र.

चाचाक २५-२९
चारुपल ५६-९५
चाहड ७३-११२, ८८-१५३
चांदिग १३-१६, १३-१६
चांडू ३४-४०
चांद्रकुमार ५९-९३
चांगा ६०-९५
चेला ६-१०
चोडसिंह ५७-९६
चंड ५१-७४
छाडा ११-१४
छाजल ७९-११६
छीहिल ५२-७७
छीता ७८-११६
जस २-२
जगतसिंह ३-५, ४०-४५, ५२-७८, ५९-९३
जयदेव ८-१२, १८-२४, १९-२५, ४४-५०, ९३-१५७
जगसिंह १४-१९, ७८-११६, ९४-१६१
जसपाल १७-२३
जगदेव २१-२६, ३४-४०, ३४-४० ४२-४७
जगचंद्र २७-३५
जइतसिंह २८-३६, ६०-९४
जगपाल ३०-३८
जयतू ३४-४०
जल्हण ४०-४५, ५७-९६
जयसिंह ४७-५७, ६४-१०२
जयंत ५८-९२
जसडुक ७२-११२
जामक १६,२३
जालण ३७-४२
जाल्हण ४२-४६
जाहड ५५-८९
जांजण ३७-४२
जिनपति ८-१२

श्रावको पृ. प्र.

जिणचंद्र १९-२५, ४०-४५, ४४-५०
जिणदेव २५-३२, २७-३५, ५४-८४
जिंदा ३४-४०
जिनदास ७६-११३
जिनदेव ९२-१५७
जेहड १८-२४, ३७-४२, ४५-५०
जेसल ६४-१०२
झडशिल ४-८
झांझण ५८-९२, ६४-१०२, ९४-१६३
झंझुल २३-३७
ठकुरा ८२-१३१
डाहाक ६१-९६
डाहा ७६-११३
डांटाक ९-१३
डुंगर ६५-१०२
णहुल ९४-१६३
तात ८६-१४७
त्रिभुवन २५-२९
तिहुण ४२-४६
तिहु (यण] सिंह ५४-८६
तिहु ७८-११६
तेजपाळ ४९-६६, ८४-१३६
तेजा ६०-९५, ६२-९८
देउक ४१-४६
दल्हा ५४-८४
द्रीताक २५-२९
दुल्हण ५२-७७
देवचंद्र २-२, १३-१६, १९-२५, ४४-५०,४६-५४ ७२-११२, ७६-११३
देवकुमार ६-१०, १८-२४, ४५-५०
देवधर ८-१२, ३४-४०, ३४-४०, ४२-४७, ४४-५०

